रामानंद सागर कृत

# रामायण

## चित्र-कथा

१२ विभागों में । हिंदी और अंग्रेज़ी में ।




प्रति विभाग का मूल्य ५ रुपये



चन्दामामा विजया कम्बाइन्स
१८८, एन्.एस्.के. मार्ग, वडपलनी,
मद्रास ६०० ०२६ द्वारा प्रकाशित

अनुमति प्राप्त



सागर एन्टरप्राइजस्
नटराज स्टुडिओज, १९४ अंधेरी कुर्ला रोड, मुंबई-४०० ०६९.



अब समाचारपत्र-विक्रेताओं के पास उपलब्ध

कविहृदयम्–

# क्षेत्रदूषणम्

**गेहं दुर्गतबन्धुभिर्गुरुगृहं छात्रैरहङ्कारिभिः**
**हट्टं पत्तनवञ्चकैर्मुनिजनैः शापोन्मुखैराश्रमान्।**
**सिंहाद्यैश्च वनं खलैर्नृपसभां चोरैर्दिगन्तानपि।**
**सङ्कीर्णानवलोक्य सत्यसरलः साधुः क्व विश्राम्यति॥**

सज्जनानां विश्रान्तिस्थानानां विषये चिन्तयन् कविः विश्रान्त्यर्हाणां स्थानानां गतिं विवृणोति– "बान्धवाः गृहम् आक्रम्य तिष्ठन्ति, अहङ्कारिणः छात्राः च गुरुकुलम् अभिव्याप्य तिष्ठन्ति। विपणिः पश्यतोहरैः व्याप्तं चेत् आश्रमाः च शापशीलैः मुनिभिः आक्रान्ताः। वनं सिंहादयः क्रूरजन्तवः व्याप्य तिष्ठन्ति, राजसभायां च दुर्जनानां प्राबल्यम्। चोराः तु दिगन्तान् एव अभिव्याप्य तिष्ठन्ति" इति।

केन कविना कदा एवम् उक्तम् इति न जानीमः वयं, किन्तु अद्यतनपरिस्थितिः तु पूर्वोक्तात् भिन्ना तु न। तत्तत्क्षेत्रदूषकाः इदानीं कुत्र न सन्ति? राजकीयक्षेत्रे, साहित्यक्षेत्रे, वस्तुनिर्माणक्षेत्रे, वाणिज्यक्षेत्रे, उद्योगक्षेत्रे, शिक्षणक्षेत्रे, सामाजिकसेवाक्षेत्रे, धार्मिकक्षेत्रे – एवं सर्वत्रापि क्षेत्रदूषकाणाम् एव प्राबल्यम्। उत्कोचादिदानं विना असत्यकथनं विना च प्रामाणिकबुद्ध्या कश्चित् जीवितुं शक्नुयात् इति सधैर्यं वक्तुं न शक्नुमः वयम्।

सर्वेषां जीवनस्य परमं लक्ष्यं धनसम्पादनम् इत्यतः न्याय्यान्याय्यविचारणां विना सर्वेऽपि नूतनानां मार्गाणाम् अन्वेषणे उद्युक्ताः भवन्ति। एतेन क्लेशः तु सामान्यानां जनानाम्। ग्राह्याग्राह्यतां, कार्याकार्यतां, युक्तायुक्तताम्, अर्हानर्हतां च विवेक्तुम् एव ते यथा न शक्नुयुः तथा विभ्रान्तिं जनयन्ति एते क्षेत्रदूषकाः। एतत् न गूढरूपेण, अपि तु प्रत्यक्षम् एव प्रचलति! अहो शोचनीयत्वम्!

एतस्य सर्वस्य अपि कारणं स्वार्थस्य प्राबल्यम्। स्वार्थभावना तदा एव गौणतां प्राप्नोति यदा च समाजविषयकं जागरणं भवति। अन्ये अपि जीवेयुः इति बुद्धिः यदा उत्पद्यते तदा परहितनाशनात् आत्मा बिभेति। तदा सहजतया स्वार्थभावना न्यूना भवति। यत्र स्वार्थभावना न भवति तत्र क्षेत्रदूषणप्रवृत्तिः अपि न भवति।


दुदम्यसङ्कल्पानां चतुर्णां मण्डली-प्रमुखोऽस्ति युसुफः, अपरः शामी-गुरुस्वामी, अन्वेषण प्रिया नैन्सी तृतीया, चतुर्थश्चास्ति परमः यो हि विपत्सु धीरः प्राकृतिकसौन्दर्यमुग्धो वीरः।
गिरिसङ्कटं यावत् सञ्चरणाय सज्जीभवन्तः
हा! हन्त! व्यर्थमेव स्वीयदूरेक्षणयन्त्रं मया पुटके स्थापितम्। पुनरपि उद्घाटयमिदं पुटकं सम्प्रति।
अहो! आश्चर्यम्! जानासि? हिमालयः अधुनापि संवर्धते प्रतिदशाब्दे प्रायः एकमीटर मितेन।


अकस्मात् प्रविशति युसुफः
आपतिता समस्या मित्राः! गिरिसङ्कटसमीपं दावाग्निः समुद्भूतः। स्थानीयाश्च जनाः कमपि जनं तत्र गन्तुं नानुजानन्ति।
पर्वतपुत्राः साम्प्रतं वनसंरक्षणाय अतितरेण दत्तावधानाः सन्ति। नूनं 'चिपको' इत्यान्दोलनस्य सुपरिणाम एव:
परं दूराद् आगताः वयं विफलमनोरथाः निवर्तयितुं नार्हामः। अस्माभिः तत्र गत्वा वस्तुस्थितिस्तु ज्ञेया एव।
निखिलमिदं क्षेत्रं कदाचित् समुद्ररूपमासीत। सम्भवतः शतसहस्राब्दपूर्वं...
परं पश्य! इदं लोकैः प्रकीर्णं उच्छिष्टं रिक्तकर्गज-पुटकादिकं मालिन्यम्।


गिरिसङ्कटं प्रत्युन्मुखाः चत्वारः पश्यन्ति प्रत्यावर्तमानं पदसञ्चारिणो दलम्...
न खलु गन्तव्यं तत्र! जाल्माः ग्रामीणाः प्रहरिष्यन्ति त्वाम्!
किमर्थम्?
क्षुद्रमग्निकाण्डम्। तदेवालक्ष्य सर्वे उद्विजन्ति।
कथं न उद्विजन्तु ते? न च ते जाल्माः। तादृशाः स्नेहशीलास्तु न मया अन्ये केऽपि दृष्टाः।




गिरिसङ्कटे...

कियद् उच्छिष्टं कर्गजादिकं विसृज्य तैः मलिनीकृतं क्षेत्रम्। शिविरे प्रज्वलितः अग्निरपि पूर्णतो नैव निर्वापितः।

पवनवेगेन केचन स्फुलिङ्गाः रिक्तानि कर्गजपुटकानि प्राप्ताः। तानि च प्रज्वलितानि। शीघ्रमेव निखिलमपि क्षेत्रम् अग्नि-परिवृतमभूत्

भाग्येन दृष्टो धूमः अस्माभिः, सर्वे च धावन्तः तत्र प्राप्ताः, परमपराधिनस्तु निर्गताः।

आम्! निर्झरसमीपं दृष्टास्ते अस्माभिः। क्षिप्रमेव गत्वा वयं तान् निरोद्धुं समर्थाः।

लघुमार्गेण गन्तव्यम्। तेभ्यः पूर्वमेव वयं वनरक्षकास्थानकं प्राप्स्यामः। तत्र च तान् निरोद्धुं शक्यते।

सर्वे द्रुतगत्या अनुसरन्ति...

एते एव ते, वनरक्षकमहोदयः!

आः, दुरात्मनः! आरक्षिणां आतिथ्यं गृह्णन्तु! रम्यं पर्वतीयक्षेत्रं मलिनीकुरुथ, दावाग्निहेतुभूताः...

साधुवादाः बालकाः! महत्कार्यमनुष्ठितं युष्माभिः!

एहि! अहं गिरिसङ्कटं नेष्यामि अत्रभवतः, साहाय्यं चापि करिष्ये।

रचयिष्यामः, रक्षिष्यामः

सुन्दरं भारतं स्वकीयम्

त्वयापि मूर्खाणां अविचारितकार्यैः नश्यमानं पर्यावरणं रक्षणीयम्। वयं सम्मिल्य प्रयतिष्यामहे चेत्तर्हि भारतस्य सौन्दर्यं अक्षुण्णं स्थास्यति।



# चन्दमामा

डिसेम्बर्-१९८९

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'    सञ्चालकः– 'नागिरेड्डी'

इदानीं कार्यक्षेत्रे यानि मुखानि दृश्यन्ते, तेषु बहूनि द्वित्राणां वर्षाणाम् अनन्तरं न दृश्यन्ते। किं कारणम् एतस्य? कौटुम्बिकसमस्याः, अल्पोत्साहः इत्यादयः कदाचित् कारणानि भवेयुः। किन्तु स्वभावपरिवर्तनं तु प्रमुखं कारणम्।

यदा कार्यं क्रियते तदा सहजतया प्रसिद्धिः लभ्यते। गौरवं वर्धते। तस्यापि अभिप्रायस्य मान्यता भवति। यदा लोके स्वाभिप्रायस्य मान्यता दृश्यते तदा सः अभिमानवान् भवति। अल्पे एव काले सः स्वाभिप्रायस्य विरोधं सोढुम् असमर्थः भवति। ततः पराभिप्रायग्रहणे तदीयम् असामर्थ्यं वर्धते। विवेचनाशक्तिः क्षीणा भवति। वस्तुनिष्ठत्वं दूरापास्तं भवति। आत्मनिष्ठता वर्धते। ध्येयनिष्ठता अपि विस्मृतप्राया भवति। एतादृशे सन्दर्भे कार्यात् विरतिः सहजा एव खलु?

कार्योत्साहस्य नैरन्तर्यार्थं यथा विशेषप्रयत्नः आवश्यकः तथैव आत्मनः योग्यतायाः रक्षणे अपि विशेषप्रयत्नः आवश्यकः एव। प्रसिद्ध्यां प्राप्तायाम् अपि आत्मनः समस्थितेः रक्षणं न तावत् सुलभम्। प्रसिद्धेः अलाभे निरुत्साहः, लाभे तु मनसि कालुष्यम्। अतः कार्यकर्त्रा एतद्विषये विशिष्य जागरूकता आश्रयणीया।

सम्पुटः–६    डिसेम्बर्–१९८९    सञ्चिका–९

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# SUNDROPS KIDS



## Sundrops Kids are coy 'n' bookish prim 'n' prudish!

Sundrops Kids. You can spot them a mile away ! Their laughing faces. Their busy, buoyant feet. Their rough 'n' tumble games.

And you can spot their Sundrops Shoes. As colourful, exciting and trendy as this peppy, happy clan. Made of bright, vibrant, easy-to-clean canvas. With a flexible rubber sole to match.

Sundrops Shoes. Not just any kid can walk away in them!

* *Special Festival Offer for 1989*




COLOURFUL CANVAS SHOES FROM Bata

*For mischievous young people only!*

LINTAS (CAL)/BA/SD/1/2116



## कलकत्तानगरस्थापकः

इदानीं कलकत्तानगरं महानगरेषु अन्यतमम् अस्ति। किन्तु त्रिशतात् वर्षेभ्यः पूर्वम् अत्र विशालानि कृषिक्षेत्राणि, हरिद्वर्णाः शाद्वलाः, सिकतामयाः प्रदेशाः, मध्ये मध्ये केचन अल्पाः ग्रामाः च आसन्। त्रिशतवर्षाभ्यन्तरे अत्र एतादृशं महत् परिवर्तनं कथम् आगतम्?

१६९० तमे वर्षे जाब् चार्नाक् नाम आंग्लयुवकः हूग्लीनदीतीरम् आगतवान्। ईस्ट् इण्डिया कम्पनीविषये वयं सर्वे जानीमः एव। आंग्लैः उपस्थापिता वाणिज्यसंस्था सा। वाणिज्यव्याजेन भारतम् आगता ईस्ट्इण्डियासंस्था स्वस्य राजकीयकौटिल्येन, कुतन्त्रैः, भापनेन, वञ्चनया च अस्मद्देशीयानि अनेकानि राज्यानि स्वायत्तानि अकरोत्। तया एव संस्थया जाब् चार्नाक् हूग्लीनदीतीरं प्रति प्रेषितः।

१६९० तमे वर्षे अगस्ट्मासस्य २४ तमे दिनाङ्के जाब् चार्नाक् कलकत्तानगरार्थं शिलान्यासं कृतवान्।

कलकत्तानगरस्य निर्माणानन्तरं त्रिशतं वर्षाणि जातानि यत्, तस्य स्मरणार्थं गते अगस्ट्मासस्य २४ तमे दिनाङ्के, सेण्ट् जार्ज् चर्च् प्राङ्गणस्य पुरतः स्थितस्य जाब् चार्नाक् शवस्तूपस्य समीपे, काचित् सभा आयोजिता आसीत्। नग-स्तुतिपरेण प्रार्थनागीतेन सह सभारम्भः जातः। अनन्तरं जाब् चार्नाक् शवस्तूपम् उभयतः सस्यानि आरोपितानि। ततः भाषणानि प्रवृत्तानि। वक्तारः, कलकत्तानगरे जातान् महनीयान् परिचाययन्तः, तत् नगरं केन्द्रीकृत्य कार्यं कृतवतः राष्ट्रियनायकान् अधिकृत्य भाषणानि कृतवन्तः।



## दीर्घायुष्यस्य रहस्यम्

अगस्ट् २३ दिनाङ्के ग्रेट् ब्रिटन्देशे कस्मिंश्चित् ग्रामे कश्चन वृद्धः स्वस्य ११२ तमं जन्मदिनोत्सवाचरणं निरुद्विग्नं दृष्टवान्। अतिप्राचीनः वृद्धः अयम् एव इति पत्रिकाः वार्ताः प्रसारितवत्यः। तत्समानवयस्कः, ततः ज्येष्ठो वा लोके अन्यत्र स्यात् अपि। किन्तु वयं तु न जानीमः।

११२ तमं जन्मदिनोत्सवम् आचरतः एतस्य नाम जान् इवान्स् इति। एषः खनीषु षष्टिवर्षाणि यावत् कार्यं कृतवान् आसीत्।

"भवता एतत् दीर्घायुष्यं कथं साधितम्?" इति पृष्टवन्तः तदभिमानिनः।

तदा सः वृद्धः उक्तवान्– "अहं मद्यं न पिबामि। धूमपानं न करोमि। द्यूते आत्मानं न प्रेरयामि। सदा शान्ततया एव तिष्ठामि। मम जीवने कोपप्रसङ्गः अतीव विरलः आसीत्" इति।

तस्य समीपवर्तिनः वदन्ति यत् तेन कृतं मद्यपानं धूमपानं वा, तेन प्रदर्शितं कोपं वा वयं न दृष्टवन्तः एव इति। अतः तेन यत् उक्तं तत् आचरितम् अपि इत्येतत् प्रमाणीकृतं भवति। इदानीं ज्ञातं खलु दीर्घायुष्यं कथं सिध्यति इति?

## महान् ग्रन्थभारः

चतुर्मीटर्दीर्घः, त्रिमीटर्विशालः, अष्टटन्भारयुतः ग्रन्थः एषु दिनेषु फ्रान्स्देशे टूलौस्नगरे सार्वजनिकदर्शनार्थं स्थापितः आसीत्।

काचित् स्थानीया प्रकाशनसंस्था स्वस्य १५० तमस्य वार्षिकोत्सवस्य सन्दर्भे एतत् महापुस्तकं प्रकाशितवती। परिश्रमः, वाणिज्यं, कला, प्रकाशनम् इत्येतेषां विषयाणां निमित्तम् एतस्मिन् ग्रन्थे ३० पुटाः उपयुक्ताः। एतेषु एकैकस्य पुटस्य भारः प्रायः २०० कि.ग्रां भवेत्।





# घण्टापिशाचः

गणेशपुरनामके ग्रामे पूर्वं लक्ष्मीकेशवः नाम कश्चन वलयविक्रयिकः आसीत्। वलयानां विक्रयणार्थम् उपयुज्यमानम् एकं शकटम् आसीत् तस्य समीपे। सः शकटे विविधवर्णीयान् वलयान् रमणीयतया स्थापयित्वा– "वलयाः, वलयाः। वर्णमयाः वलयाः" इति वदन् शकटे योजितां घण्टां वादयन् ग्रामे अटति स्म। तस्य घण्टायाः नादः सुमधुरः आसीत्।

कदाचित् लक्ष्मीकेशवः सुदूरं गत्वा वाणिज्यं समाप्य विशेषलाभं प्राप्य गृहं प्रत्यागच्छन् आसीत्। तावता अन्धकारः प्रसृतः आसीत्।

मार्गस्य पार्श्वे कश्चन विशालः तिन्त्रिणीवृक्षः। कुतश्चित् आगतः कश्चन पिशाचः तस्मिन् वृक्षे वासम् आरब्धवान् आसीत्। सः कश्चन दुरचेष्टापरः पिशाचः। 'अद्य कः केन प्रकारेण पीडनीयः?' इति आलोचयन् आसीत् सः। तावता घण्टां वादयन् लक्ष्मीकेशवः तत्र आगतः।

पिशाचेन इतः पूर्वं घण्टा न दृष्टा आसीत्। घण्टानादः अपि न श्रुतः आसीत्। घण्टायाः आकारेण, ततः उत्पद्यमानेन नादेन च आकृष्टः अभवत् पिशाचः।

सः वायौ सञ्चरन् झटिति अधः आगत्य घण्टाम् आकृष्य ततः अदृश्यतां गतः। पिशाचदर्शनात् नितरां भीतः लक्ष्मीकेशवः वेगेन धावितवान्।

ग्रामे अश्वत्थवृक्षस्य अधः जल्पने मग्नान् दृष्ट्वा पिशाचेन कृतं घण्टापहरणं निवेदितवान् सः।

तत्र स्थितेषु कोऽपि लक्ष्मीकेशवस्य वचने न विश्वसितवान्।

'केनचित् दुष्टेन बालेन घण्टा अपहृता स्यात्। भ्रान्तः एषः घण्टा पिशाचेन अपहृता इति वदति' इति उपहासपूर्वकं परस्परम्



प्राप्नोति सः।

एतत्कारणतः गणेशपुरस्य जनाः रात्रौ निद्राम् एव न प्राप्नुवन्ति। पिशाचः तु आरात्रि दुश्चेष्टाः प्रदर्शयन् सन्तोषम् अनुभवन् समयं यापयति। दिने तिन्त्रिणीवृक्षे सुखेन निद्राति च।

एतस्य घण्टापिशाचस्य पीडातः मोक्षः कथं प्राप्तव्यः इति ग्रामे कोऽपि न जानाति। तदा पार्श्वग्रामस्य रुद्रेशः 'अहम् एतं पिशाचं अनायासेन दूरं प्रेषयितुं शक्नोमि' इति सर्वेषां पुरतः उक्तवान्। स्वसामर्थ्यविषये जनेषु विश्वासम् उत्पाद्य तेभ्यः धनम् अपि सङ्गृहीतवान् सः।

एकदा अन्धकारप्रसारस्य अनन्तरं रुद्रेशः जम्बीरफलं, कुङ्कुमं, निम्बपत्राणि च स्वीकृत्य दीपिकया सह अग्रे गच्छन् मन्त्रोच्चारणेन पिशाचस्य आवाहनं कृतवान्। एतेन पिशाचः तु तस्य समीपम् आगतः। किन्तु बलात् तं पातयित्वा तस्य कण्ठे लम्बमानां रजतमयीं घण्टाम् अपहृत्य ततः अदृश्यः अभवत्।

रुद्रेशः मन्दम् उत्थाय वस्त्रविधूननं कुर्वन् धूलिम् अपनीतवान्। "एतं पिशाचं निवारयितुं न केवलम् अहं, मम गुरुः चण्डप्रचण्डः मार्कण्डेयाचार्यः अपि न शक्नोति। अहं मम मन्त्रबलेन प्रबलान् पिशाचान् दूरीकर्तुं शक्नोमि। किन्तु उन्मत्तवत् स्थितस्य दुश्चेष्टापरस्य

उक्तवन्तः ते।

अनन्तरदिने मिष्टखाद्यविक्रयिकस्य गुरुराजस्य घण्टा अपि अपहृता। अध्यापकस्य शिवरामस्य अपि घण्टा अपहृता। बहुषु गृहेषु अपि घण्टा न दृश्यते स्म।

सर्वे 'एतत् कथं भवति?' इति चिन्ताक्रान्ताः आसन्। तावता लक्ष्मीकेशवस्य वचनस्य प्रमाणभूता घटना ग्रामे प्रवृत्ता। सः पिशाचः सर्वेभ्यः अपहृत्य नीताः घण्टाः मालाकारेण योजयित्वा तां घण्टामालां कण्ठे धृत्वा रात्रौ ग्रामे अटनम् आरब्धवान्। आकाशे सञ्चरन् सः कूर्दति, उत्प्लवते, वलति, नृत्यति च। तदा यः घण्टानादः श्रूयते तेन महान्तं सन्तोषं

पिशाचस्य पीडां निवारयितुं न शक्नोमि" इति वदन् स्ववस्तुभिः सह ततः निर्गतवान्।

नगरे विद्याभ्यासे रतः वसन्तो नाम युवकः कदाचित् बन्धुदर्शनार्थम् एतं ग्रामम् आगतवान्। 'पिशाचः घण्टां वादयन् जनान् पीडयति, जनाः रात्रौ निद्रां कर्तुं न शक्नुवन्ति, पिशाचस्य दूरीकरणे मान्त्रिकः अपि असफलः जातः' इति सः श्रुतवान्। सः धैर्यशाली बुद्धिमान् च। 'केनापि उपायेन एतं पिशाचं दूरं प्रेषयिष्यामि' इति ग्रामीणान् उक्तवान् सः।

अनन्तरदिने रात्रौ सः बृहद्घण्टां स्वीकृत्य तदा तदा वादयन् मार्गेषु सञ्चारं कृतवान्। तेन यथा तर्कितं तथैव, घण्टानादेन आकृष्टः पिशाचः वायौ सञ्चरन् तस्य पुरतः अतिष्ठत्। वसन्तः तु पिशाचं दृष्ट्वा अपि धैर्येण स्थितवान्।

तदा पिशाचः नेत्रे घूर्णयन् मुखं सुविशालम् उद्घाट्य मुखात् अग्निज्वालां निस्सारितवान्।

एतत् दृष्ट्वा हसन् वसन्तः– "भोः, अग्निः पञ्चसु भूतेषु अन्यतमः। इतोऽपि किञ्चित्कालम् एवम् एव अग्निं निस्सारयतु। शैत्येन पीडितः अहं सुखम् अनुभवामि" इति उक्तवान्।

तदा पिशाचः अग्निनिस्सारणं स्थगयित्वा अवदत्– "अये, मम दर्शनमात्रात् भीताः ग्रामीणाः हस्ते स्थितं वस्तु तत्रैव पातयित्वा पलायनं कुर्वन्ति। भवान् तु धैर्येण स्थितवान्। साधु, भवतः हस्ते स्थिता घण्टा



मधुरं नादं जनयति। तां मह्यं ददातु तावत्" इति।

"एतस्याः घण्टायाः स्वीकारेण भवतः कोऽपि लाभः नास्ति। यतः एतां वादयितुं न शक्नोति भवान्" इति उक्तवान् वसन्तः।

"पश्यतु, मम कण्ठे कति घण्टाः सन्ति इति। ताः सर्वाः वादयितुं समर्थः अहं भवता वाद्यमानां घण्टां वादयितुं न शक्नुयां वा? किं वदति भवान्?" इति अपृच्छत् पिशाचः।

"अस्तु तर्हि घण्टां भवते ददामि। किन्तु कश्चन नियमः। घण्टां वादयितुं न शक्तं चेत् भवता पुनः कदापि कोऽपि ग्रामः न प्रवेष्टव्यः। एतत् अङ्गीकरोति चेत् घण्टां दास्यामि" इति सूचितवान् वसन्तः।

"एतावान् एव खलु नियमः? अङ्गीकृतं मया। घण्टां ददातु तावत्" इति अवदत् पिशाचः।

घण्टां स्वीकृत्य वादयितुं बहुधा प्रयत्नम् अकरोत् पिशाचः। किन्तु सः न अशक्नोत्।

तदा सः घण्टायाः अन्तः दृष्टिं प्रसार्य– "भोः, वञ्चना एषा। अस्याः अन्तः चलनशीला लोहजिह्वा एव नास्ति। तां विना कथं शब्दस्य उत्पत्तिः? भवान् एकवारम् एतां घण्टां वादयतु। तथा कर्तुं शक्तं चेत् नियमानुसारम् अहं ग्रामं त्यक्त्वा गच्छामि" इति अवदत्।

वसन्तः पिशाचहस्ततः घण्टां स्वीकृत्य इतस्ततः चालितवान्। घण्टा 'गण् गण्' इति नादम् अकरोत्।

तदा पिशाचः म्लानवदनः सन्– "भवान् कश्चन मान्त्रिकः इति भाति। अहं पराजितः अस्मि। नियमानुसारम् इतः गच्छामि। पुनः कदापि कमपि ग्रामं न प्रवेक्ष्यामि" इति उक्त्वा ततः अदृश्यः अभवत्।

वसन्तः सन्तोषेण गृहं प्रतिगतवान्। वस्तुतः तु वसन्तः युतकस्य अन्तः हस्ते अन्यां घण्टां बद्धवान् आसीत्। यदा सः हस्तं चालयति तदा घण्टानादः श्रूयते स्म। मूढः पिशाचः एतत् रहस्यं ज्ञातुं यत् न अशक्नोत् तत् तु ग्रामीणानां सौभाग्यम्।





# लुण्ठाकः युवराजः

## २

(सुमेधराज्यस्य राजा शान्तिदेवः शान्तिप्रियः। राजबन्धुः सेनापतिः वीरसिंहः राजकुटुम्बस्य नाशार्थम् उद्युक्तः। एतदर्थं सः राजकुमारस्य द्वितीयजन्मोत्सवदिनं चितवान् आसीत्। वीरसिंहस्य कुतन्त्रं ज्ञात्वा राजा शान्तिदेवः राज्ञीं द्विवर्षीयेण पुत्रेण सह सुरङ्गमार्गेण प्रेषितवान्। स्वयं च विरोधिनां सम्मुखीकरणार्थं सिद्धः जातः। तदनन्तरम्......।)

"द्वारम् उद्घाटयतु रे" इति कठोरः ध्वनिः पुनः पुनः श्रूयते स्म। शान्तिदेवः क्षणकालं मौनं स्थितवान्। तस्य नाडीषु रणोत्साहः वर्धमानः आसीत्।

"अये भीरुराज! द्वारम् उद्घाटयतु रे" इति पुनः अपि गर्जनं श्रुतम्। राजा द्वाराणां मध्यस्थात् अवकाशात् बहिः दृष्टिं प्रसारितवान्।

दशद्वादश स्थूलाः घोराकाराः भटाः निरन्तरं द्वारं ताडयन्तः आसन्। तेषां मुखं तु इतः पूर्वं न दृष्टम् आसीत् शान्तिदेवेन। 'पार्श्वस्थात् राज्यतः एतान् आनायितवान् स्यात् वीरसिंहः' इति आलोचितवान् शान्तिदेवः।

ते भटाः व्रणिताः व्याघ्राः इव गर्जन्तः हस्ताभ्यां पादाभ्यां च द्वारं ताडयन्ति स्म। चिरकालानन्तरम् अपि यदा द्वारम् उद्घाटितं न अभवत् तदा ते नितरां क्रुद्धाः। द्वारस्य



भञ्जनार्थं ते काष्ठस्तम्भान् वृक्षखण्डान् च आनीतवन्तः।

इतः परं द्वारम् अधिककालं यावत् रक्षणं न दद्यात्' इति आलोच्य राजा किञ्चित् अपसृत्य स्थितवान्।

भटाः दारुखण्डं स्कन्धे संस्थाप्य, तेन द्वारम् भञ्जयितुम् इच्छन्तः किञ्चित् पृष्ठतः गत्वा वेगेन यदा अग्रे आगताः तदा राजा झटिति द्वारम् उद्घाटितवान्। एतेन सर्वे भटाः प्रकोष्ठस्य अन्तः पतितवन्तः। तेषाम् उपरि दारुखण्डः पतितः। राजा झटिति अग्रे आगत्य विद्युद्वेगेन खड्गं चालयन् एकेन एव प्रहारेण द्वयोः शिरच्छेदं कृतवान्।

"शत्रुः पलायमानः अस्ति। आगच्छन्तु। बध्नन्तु" इति वदन्तः अन्ये भटाः इतस्ततः धावन्ति स्म।

तावता सुदूरात् आगतः दर्पद्योतकः कर्णकठोरः कण्ठध्वनिः श्रुतः– "मा त्यजन्तु तम्। कथमपि मारयन्तु। शत्रुः सजीवं पलायितः चेत् भवतां मुण्डानि रुण्डेभ्यः पृथग्भवन्ति। स्मरन्तु" इति।

एषः वीरसिंहस्य एव कण्ठस्वरः इति ज्ञातवान् राजा शान्तिदेवः।

राजप्रासादस्य अन्तः एवं विद्रोहिणः कार्यं प्रचलत् अस्ति चेत् बहिः उत्सवाङ्गतया हासध्वनिः स्फोटकशब्दः च निरन्तरं श्रूयते। आकाशं गतानि स्फोटकानि सशब्दं प्रसरणेन चित्रविचित्रवर्णोपेतस्य वृक्षस्य भ्रमं जनयन्ति स्म। एतत्सर्वं ससन्तोषं पश्यन्तः जनाः अन्तः प्रचलत् युद्धं सर्वथा न जानन्ति स्म।

अन्तःपुरे अनेके प्रकोष्ठाः मण्डपाः च आसन्। तेषां सर्वेषां द्वारं पिहितम् आसीत्। येन केनाऽपि द्वारेण बहिः आगच्छन्तं राजानं राज्ञीं च मारयितुं सिद्धाः आयुधहस्ताः भटाः तत्र सर्वत्र दृश्यन्ते स्म।

पुरतः दृश्यमानानि सोपानानि आरोहन् राजा वेगेन धावितवान्। तत्र रक्षणकार्ये निरतः दृढकायः भटः राज्ञः उपरि खड्गं प्रयुक्तवान्। राजा झटिति किञ्चित् अवनम्य भटस्य पादौ बलात् आकृष्टवान्। एतेन सः भटः पतितः। राजा अग्रे धावितवान्। तत्र द्वारं पिहितम् आसीत्। राजा यावत् अर्गलम् अपसारितवान् तावता अधस्तात् द्वौ भटौ

राज्ञः समीपम् आगतवन्तौ। राजा पादप्रहारेण तौ पातितवान्। आक्रन्दनं कुर्वन्तौ तौ अधः पतितवन्तौ। राजा द्वारं उद्घाट्य उपरितनं भागं गतवान्।

राजप्रासादस्य पुरतः प्रचलत् उत्सवाचरणं पश्यन्तः जनाः हर्षध्वनिपूर्वकं पुनः पुनः करताडनं कुर्वन्ति स्म। यस्य जन्मदिनोत्सवः आचर्यमाणः अस्ति सः तस्य माता च मृत्युमुखे स्तः इति, राजा च दुष्टानां कुतन्त्रं धैर्येण एकाकितया सम्मुखीकुर्वन् अस्ति इति च ते न जानन्ति। राज्ञः प्रजानां च मध्ये महत् अन्तरं न दृश्यते। किन्तु प्रजानां समीपं गन्तुं, ताः जागरयितुं वा अवकाशः नास्ति। अहो विधिवैपरीत्यम्!

सोपानानि आरुह्य आगच्छतः कस्यचित् पादध्वनिः श्रुतः शान्तिदेवेन। द्वारं तु उद्घाटितम् आसीत् एव। द्वारसमीपे स्थित्वा आरुह्य आगच्छतः भटान् उक्तवान् राजा— "यदि कोऽपि मम ग्रहणार्थं प्रयत्नं कुर्यात् तर्हि सः समसदनं गच्छेत्। जागरूकाः भवन्तु। भवतां यजमानम् अत्र प्रेषयन्तु" इति।

तदा अधः स्थितः वीरसिंहः— "तं मारयन्ति चेत् अमूल्यं पारितोषिकं प्राप्यते। भीतिः मास्तु। अग्रे गच्छन्तु" इति वदन् भटान् प्रोत्साहितवान्।

धनं दृष्ट्वा शवः अपि मुखम् उद्घाटयति इति श्रूयते। मानवः तु धनं प्राप्यते इति अस्ति चेत् सर्वविधानि अपि दुष्कार्याणि कर्तुं सिद्धः भवति।



"हुँ, तत् अमूल्यं पारितोषिकं मया एव प्राप्येत" इति वदन्तः भटाः केचन अग्रे आगतवन्तः।

"पारितोषिकं मया दीयते। अत्र आगच्छन्तु" इति वदन् शान्तिदेवः तान् लक्ष्यीकृत्य खड्गं प्रयुक्तवान्।

तेन द्वयोः भटयोः खड्गः पतितः। तौ आक्रन्दनं कुर्वन्तौ लुठन्तौ पतितवन्तौ।

इदानीं शान्तिदेवः उत्तमे स्थले अस्ति। शत्रूणाम् आगमनं सोपानमार्गेण केवलं सम्भाव्यते, न तु अन्यतः। तेन मार्गेण यावन्तः आगताः चेदपि तान् लीलया मारयितुं शक्नोति राजा।

एतम् अपायं जानन्तः वीरसिंहस्य भटाः

केचन भवनस्य अपरस्मात् पार्श्वतः निश्रेण्याः आधारेण उपरि आगन्तुं प्रयत्नं कृतवन्तः।

एवं भवेत् इति जानन् राजा सोपानानि आरुह्य आगच्छतः भटान् लीलया सम्मुखीकुर्वन् इतरत्र अपि जागरूकतया पश्यन् आसीत्।

निश्रेणीसाहाय्येन अट्टम् आरुह्य कुन्तायुधं प्रयोक्तुम् उद्युक्तः कश्चन भटः शान्तिदेवेन दृष्टः।

राजा झटिति परिवृत्य अवनमनपूर्वकं गत्वा तं भटं बलात् नोदितवान्। सः भटः आक्रन्दनपूर्वकं भूतलं प्राप्तवान्।

राजा अधः दृष्टिं प्रसारितवान्। इतोऽपि केचन निश्रेणीम् आरोहन्तः सन्ति। राजा झटिति अग्रे गत्वा पादेन बलात् निश्रेणीं नोदितवान्। भटानां हाहाकारध्वनिः तत्र श्रुतः।

एतावता केचन भटाः सोपानमार्गेण उपरि आगतवन्तः आसन्। प्रवाहरूपेण भटाः ततः आगच्छन्तः एव सन्ति।

एतादृश्यां परिस्थितौ युद्धं निष्प्रयोजकम् इति शान्तिदेवः ज्ञातवान्। वीरसिंहस्य पक्षे शताधिकाः भटाः स्युः। एकाकी राजा तेषु कति जनान् मारयितुं शक्नुयात्? अन्ते मरणम् एव शरणं भवेत्।

मरणात् भीतिः तु राज्ञः नास्ति। पुत्रं युवराजं च सुरङ्गमार्गेण यत् प्रेषितं तेन राज्ञा काचित् तृप्तिः प्राप्ता अस्ति। चरमं वाक्यम् अपि राज्ञीम् उक्तवान् अस्ति सः। अतः एव



मरणात् तस्य भीतिः नास्ति। मरणं निश्चितं चेदपि अन्तिमश्वासपर्यन्तं युद्धकरणं क्षत्रियस्य लक्षणं खलु?

शत्रुसैनिकाः राज्ञः समीपम् आगताः। तावता किञ्चन स्फोटकं राज्ञः उपरि एव सप्रकाशं स्फोटितम् अभवत्। एतेन भटानां पृष्ठतः स्थितः विश्वासद्रोही वीरसिंहः स्फुटं दृष्टः राज्ञा।

"अये विश्वासघातक! नराधम! स्वीकरोतु एतत् उपायनम्" इति वदन् राजा तीक्ष्णं खड्गं वीरसिंहम् उद्दिश्य क्षिप्तवान्। तावता वीरसिंहः शिरः पार्श्वे नीतवान्। तेन मरणं तु अपगतं, किन्तु तदीयः वामकर्णः कर्तितः अभवत्।

कोपेन ज्वलन् वीरसिंहः – "गृहणन्तु तम्। मारयन्तु" इति कर्कशस्वरेण उक्तवान्। भटाः परमोत्साहेन शान्तिदेवस्य उपरि आक्रमणं कृतवन्तः। तावता शान्तिदेवः वीरसिंहपक्षीयैः भटैः पुनः आनीय स्थापितायाः निश्रेण्याः साहाय्येन अधः गन्तुम् उद्युक्तः।

"निश्रेणीं पातयन्तु भोः, पातयन्तु" इति कठोरस्वरेण आज्ञापितवान् वीरसिंहः। अत्रान्तरे राजा निश्रेण्याः मध्यभागे आसीत्।

सः झटिति अधः उत्प्लुत्य वलन्तीं निश्रेणीम् अपरभागे नोदितवान्। सा पार्श्वस्थां दुर्गभित्तिम् आलम्ब्य स्थिता।

"निश्रेणीम् आकृष्य पातयन्तु भोः" इति पुनः उच्चैः आज्ञापितवान् वीरसिंहः। किन्तु तत्र तथा कर्तुं कः अस्ति? राज्ञः मारणार्थं सर्वे





अट्टम् आरुह्य स्थिताः आसन्। राजानं यः मारयति सः प्रभूतम् ऐश्वर्यं प्राप्स्यति इति वीरसिंहः उद्घुष्टवान् आसीत् खलु? अतः ते सर्वे धनाशया उपरि एव, यत्र शान्तिदेवः आसीत् तत्र, स्थिताः आसन्।

शान्तिदेवेन निश्रेणीतः पातितौ द्वौ भटौ तीव्रं व्रणितौ आस्ताम्। तौ एव कथञ्चित् उत्थाय मन्दं गत्वा निश्रेणीम् आक्रष्टुम् उद्युक्तौ। किन्तु तावता शान्तिदेवः दुर्गभित्तिम् आरूढवान् आसीत्।

''भोः मूर्खौ! इतःपरं निश्रेण्याः आकर्षणेन किं फलम्? उपरि गत्वा तं मारयतां तावत्'' इति आज्ञापितवान् वीरसिंहः।

दुर्गभित्तेः अपरस्मिन् पार्श्वे सुमतीनदी प्रवहति। तस्याः तरङ्गाः दुर्गभित्तिं सदा स्पृशन्ति। राजा शान्तिदेवः दुर्गभित्तेः उपरि स्थित्वा अग्रे किं करणीयम् आलोचयन् अस्ति।

कर्णच्छेदनात् जातां वेदनां सहमानः एव वीरसिंहः वेगेन सोपानानि अवरुह्य अधः आगतवान्। शान्तिदेवः यदि सजीवं तिष्ठेत् तर्हि कदाचित् वा अपायः निश्चितः एव इति सः जानाति। अतः सः— ''भो भोः, आरोहन्तु। कथमपि तं मारयित्वा पारितोषिकं प्राप्नुवन्तु। हुँ, गच्छन्तु'' इति भटान् प्रोत्साहयन् स्वयं च कुन्तायुधं स्वीकृत्य शान्तिदेवं लक्ष्यीकृत्य प्रयुक्तवान्।

वीरसिंहेन प्रयुक्तं कुन्तायुधं शान्तिदेवे लग्नम् उत न इति तु कोऽपि न जानाति। वेगेन गच्छतः कुन्तायुधस्य चमत्कृतिः तु बहुभिः दृष्टा अस्ति। किन्तु तत् राजनि लग्नं वा न वा इति केनापि न दृष्टम्। राज्ञः आर्तनादः अपि केनापि न श्रुतः। आश्चर्यं नाम तत्र इदानीं राजा तु न दृश्यते।

वीरसिंहः झटिति निश्रेण्याः साहाय्येन दुर्गभित्तिम् आरूढवान्। इतस्ततः दृष्टिं प्रसारितवान्।

राजा यदि व्रणितः स्यात् तर्हि तत्र रक्तचिह्नं दृश्येत। किन्तु तादृशं चिह्नं तत्र न दृष्टम् । व्रणितः राजा जले पतितवान् वा इत्यपि परीक्षितवान् वीरसिंहः। नद्यां रक्तवर्णमिश्रणं तु न दृश्यते। कुन्ताघाततः आत्मानं रक्षन् राजा स्वयं नद्यां पतन्

पलायितवान् स्यात् वा इति सन्देहः वीरसिहस्य। राज्ञः पलायनं सम्भावयतः तस्य हृदये भीतिः उत्पन्ना।

''मया प्रयुक्तं कुन्तयुधं कुत्र गतम् इति दृष्टं वा भवद्भिः?'' इति भटान् पृष्टवान् वीरसिंहः।

''आं दृष्टम् अस्माभिः'' इति उक्तवन्तः सर्वे भटाः।

''तत् आयुधं शान्तिदेवे लग्नं वा?'' इति पुनः पृष्टवान् वीरसिंहः।

''निश्चयेन, निश्चयेन'' इति उक्तवन्तः केचन भटाः।

''तत् शान्तिदेवे लग्नम् इति सुस्पष्टं केन दृष्टम्?'' इति पुनरपि पृष्टवान् वीरसिंहः।

इदानीं सर्वे मौनं स्थितवन्तः। यतः तत् आयुधं शान्तिदेवे लग्नम् इति केनापि न दृष्टम् आसीत्।

तथापि कश्चन भटः वीरसिंहस्य प्रीतिं सम्पादयितुम् इच्छन्– ''आयुधप्रयोगनिपुणेन सेनापतिना भवता प्रयुक्तम् आयुधं लक्ष्यच्युतं कथं वा भवेत्? तत् शान्तिदेवस्य मर्मस्थलं प्राप्नोत् एव'' इति उक्तवान्।

''मर्मस्थले नाम कुत्र? उरसि, कण्ठे, उत नेत्रे? स्पष्टं वदतु'' इति गर्जितवान् वीरसिंहः।

''उरसि'' इति यावत् सः भटः उक्तवान् तावता अपरः उच्चैः उक्तवान्– ''न न, कण्ठे'' इति। ''उदरे'' इति अन्यः उक्तवान्।

''अलम् उन्मत्तप्रलापेन'' इति वदन् कोपेन पादेन भूमिं प्रहरन् वीरसिंहः– ''मम आयुधं शान्तिदेवे लग्नम् इति केनापि प्रत्यक्षं दृष्टं चेत् सः वदतु नाम। अन्यथा सर्वे मौनं तिष्ठन्तु। असत्यकथकः दण्ड्येत। यथामति उत्तरं न, प्रत्यक्षं दृष्टं चेत् तदेव वक्तव्यम्'' इति गर्जितवान्।

इदानीं सर्वे भटाः मौनम् आश्रितवन्तः। वीरसिंहः पञ्जरबद्धः सिंहः इव इतस्ततः सञ्चरन् वेगेन प्रवहन्तीं नदीं निर्निमेषं पश्यति। वीरसिंहम् उपहसन्ती इव नदी सशब्दं प्रवहति।

(अनुवर्तते)






# शूरसेनराजः

महामेधाविनं महाराजं त्रिविक्रमम् अहं कथाः श्रावयामि चेत् मम कीर्तिः आचन्द्रार्कं तिष्ठति इति भावयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं यथापूर्वं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! मध्यरात्रे, भयङ्करे एतस्मिन् श्मशानमार्गे भवान् यत् कार्यं करोति तत् अन्येन कर्तुम् असाध्यम् एव। किन्तु एतेन किं सेत्स्यति? भवन्तम् एतस्मिन् कार्ये ये नियोजितवन्तः ते कार्यसिद्धेः अनन्तरं भवन्तम् आदरेण पश्यन्तः सत्कुर्युः इत्यत्र कः विश्वासः? पूर्वं महापण्डितः सन् शूरसेनराजः उपकृतवन्तम् अपि निर्दयं दण्डितवान्। एतादृशे कार्ये यः प्रवर्तते तेन शूरसेनस्य कथा अवश्यं

## वेतालकथा



श्रोतव्या। तां कथां श्रावयामि। कथां शृण्वन् गच्छतु भवान्, येन मार्गायासः किञ्चिदपि न ज्ञायेत" इति।

अनन्तरं वेतालेन कथा आरब्धा–

शूरसेनो नाम राजा पूर्वं गान्धारदेशं पालयन् आसीत्। सः शासनदक्षः, महापण्डितः, कलापोषकश्चापि आसीत्। नाट्यविद्यायां चित्रकलायां च तस्य विशेषासक्तिः। अतः तदीयम् आस्थानं कवीनां चित्रकाराणां नर्तकानां च आश्रयस्थानम् आसीत्। राजा एतेषां सर्वेषां कलानैपुण्यं सदा पश्यति, किन्तु काचित् अतृप्तिः तं बाधते एव।

कदाचित् शूरसेनराजः पूर्णायां राजसभायाम् उपविश्य सभाकार्याणि निर्वहन् आसीत्। तदा भटाः जीर्णवस्त्रां, विकीर्णकेशां, तैलरहितशिरस्कां काञ्चित् युवतिम् आनीय महाराजस्य पुरतः उपस्थाप्य निवेदितवन्तः– "महाप्रभो! एषा स्वर्णमुखीनद्याः प्रवाहेण नीयमाना आसीत्। तदा अकस्मात् अस्माभिः दृष्टा। करुणया वयम् एतां रक्षितवन्तः। बन्धुगृहं प्रापयितुम् इच्छन्तः एतस्याः कुलगोत्रादिकं पृष्टवन्तः। किन्तु एषा केवलम् अश्रूणि स्रावयति। बहुधा पृष्टं चेदपि एकम् अक्षरम् अपि न उच्चारयति" इति।

राजा परीक्षादृष्ट्या तां दृष्टवान्। सा एतादृश्यां हीनपरिस्थितौ अपि पङ्के स्थितं माणिक्यम् इव शोभते स्म। अपूर्वं सौन्दर्यं तस्याः।

राजा तां सान्त्वनस्वरेण पृष्टवान्– "सुन्दरि! का भवती? कथं नद्यां पतिता? किं प्रवृत्तम्?" इति।

राज्ञः वचनं श्रुतवत्याः तस्याः दुःखं प्रवृद्धम्। सा हस्तद्वयेन मुखम् आच्छाद्य उच्चैः रोदनं कृतवती।

राजा झटिति दासीः आहूय आज्ञापितवान्– "एताम् अन्तःपुरं नयन्तु। राज्ञ्याः निर्वहणे भवतु एषा" इति।

तद्दिने सायङ्काले शूरसेनराजः राज्ञ्याः लीलावत्याः समीपं गत्वा पृष्टवान्– "प्रातः या मया भवत्समीपं प्रेषिता सा कथम् अस्ति? किं तस्याः दुःखावेगः उपशान्तः? स्वविषये

किमपि उक्तवती वा सा?" इति।

"तया विशेषतः किमपि न उक्तम्। अनुरोधपूर्वकं बहुधा प्रश्नस्य अनन्तरं तया एतावत् उक्तं यत् मम नाम मल्लिका इति, अहं दौर्भाग्यशालिनी काचित् इति च। किन्तु सा न सामान्या। चित्रकलायां तस्याः अपूर्वं सामर्थ्यम् अस्ति" इति वदन्ती राज्ञी सखीं सङ्केतेन किमपि सूचितवती।

दासी एकं चित्रम् आनीय राज्ञे दत्तवती। तत् चित्रं दृष्ट्वा राजा आश्चर्यचकितः। तत् मल्लिकायाः एव चित्रम्। प्रातः राजसभायां प्रवेशसमये सा येन वेषेण, यस्याम् अवस्थायाम् आसीत्, तथैव दृश्यते स्म अस्मिन् अपि चित्रे!



शूरसेनः अत्याश्चर्येण पृष्टवान्– "चित्रम् अपूर्वम् अस्ति। तस्याः एतत् चित्रं केन लिखितम्?" इति।

तदा राज्ञी लीलावती मन्दहासपूर्वकम् उक्तवती– "चित्रे या दृश्यते तया एव लिखितम् एतत् चित्रम्" इति।

"किम्? मल्लिका स्वयम् एतत् चित्रं लिखितवती?" इति पुनः पृष्टवान् राजा।

"आं प्रभो! सा न केवलं चित्रकलां, नाट्यम् अपि जानाति। यदा अहं तस्याः पूर्वजीवनविषये पृच्छन्ती आसं तदा सा मौनेन तिष्ठन्ती पादाङ्गुष्ठेन चित्रलेखनम् अनुकुर्वती आसीत्। अहं चित्रलेखनार्थम् उपकरणानि दापितवती। तस्याः सामान्यं गमनम् अपि नाट्यम् अनुकरोति स्म। मया पृष्टा सा उक्तवती यत् यदि राजा मां परीक्ष्य अङ्गीकुर्यात् तर्हि भवताम् आस्थाने नर्तकीरूपेण स्थातुम् इच्छामि इति। भवते नाट्यं दर्शयितुम् इच्छति सा" इति उक्तवती राज्ञी लीलावती।

ततः अल्पे एव काले लीलावत्याः दासी नाट्यवेषेण सज्जां मल्लिकां तत्र आनीतवती। आभूषणैः अलङ्कृतां मल्लिकां दृष्ट्वा राजा व्यामुग्धः अभवत्।

नमस्कारभङ्ग्या स्थितां मल्लिकां पश्यन्ती राज्ञी राजानं पृष्टवती– "नृत्यस्य आरम्भः भवितुम् अर्हति खलु?" इति। राजा अङ्गीकारपूर्वकं शिरः चालितवान्।



मन्त्रिणं मल्लिकायाः विषयं निवेद्य– "ताम् आस्थाननर्तकीं कृतवान् अस्मि" इति उक्तवान्।

एतत् श्रुत्वा केशवशर्मा आतङ्कं प्रकटयन् उक्तवान्– "महाप्रभो! कीदृशम् अकार्यं कृतं भवता! मल्लिका सौन्दर्यखनी, नाट्यविशारदा, चतुरा च स्यात् नाम। किन्तु तस्याः पूर्वतनं जीवनम् अज्ञात्वा एवं नियुक्तिः उचिता तु सर्वथा न। किन्तु एतावता अपि अवकाशः न च्युतः। तस्यै आश्रयः दत्तः चेत् अलम्। राजकार्याणां विषये चर्चा यत्र प्रचलति तादृश्यां राजसभायां प्रवेशः तु मास्तु" इति।

"एतत् न शक्यते मन्त्रिवर्य! मया तस्यै तथा वचनं दत्तम् अस्ति। अतः तस्य तिरस्कारः सर्वथा न शक्यते। सा कस्यचित् देशस्य गूढचारिणी स्यात् इति खलु भवतः सन्देहः? तर्हि तस्याः चलनवलनं सुसूक्ष्मं परिशीलयिष्यामः" इति उक्तवान् राजा।

'प्रक्षालनात् हि पङ्कस्य दूरात् अस्पर्शनं वरम्' इति मन्त्रिणः आशयः। किन्तु राज्ञः आशयः एतद्विरुद्धः। मन्त्री अनिवार्यतया मौनं स्थितवान्।

एवं मल्लिका गान्धारदेशस्य आस्थाननर्तकी सञ्जाता। तया चित्रितैः चित्रैः राजभवनम् अलङ्कृतम्। सामान्याः प्रजाः, महान्तः अधिकारिणः चापि मल्लिकायाः अभिमानिनः सञ्जाताः।

मल्लिका नाट्यभङ्ग्या एव राजानं राज्ञीं च नमस्कृत्य शास्त्रीयं नृत्यम् आरब्धवती।

तस्याः नृत्यम् अपूर्वम् आसीत्। नृत्यस्य अन्ते शूरसेनः करताडनं कुर्वन्– "साधु मल्लिके साधु! नृत्यसरस्वती भवती। स्वकीयं नृत्यकलादर्शनकुतूहलं शमयितुम् एव नटराजेन भवती सृष्टा अस्ति। भवत्याः अत्र आगमनेन मम आस्थानस्य न्यूनता काचित् पूरिता अभवत्" इति उक्तवान्।

मल्लिका आनन्देन कृतज्ञताभावेन च राजदम्पती नमस्कृत्य ततः निर्गतवती। किञ्चित्कालानन्तरं राजा मन्त्रालोचन–मन्दिरं गत्वा तत्र मन्त्रिणं केशवशर्माणम् आनायितवान्।

शूरसेनः अपि तस्याः नृत्यं कलानैपुण्यं च महता आदरेण पश्यति। तथापि सः स्वकर्तव्यं न विस्मृतवान्। गूढचरद्वारा तस्याः सर्वान् व्यवहारान् परीक्षमाणः आसीत् सः।

मन्त्रिणः सन्देहः यथार्थः एव जातः। मल्लिका गान्धारदेशस्य पार्श्वे स्थितस्य कलिङ्गदेशस्य गूढचारिणी इति शूरसेनः यावत् ज्ञातवान् तावता कलिङ्गसैन्येन गान्धारदेशस्य उपरि आक्रमणं कृतम् आसीत्। गान्धारदेशे एतदुचितः सेनासन्नाहः न आसीत्। अतः सामान्येन एव युद्धेन गान्धारदेशः कलिङ्गराजस्य विकर्णस्य अधीनः जातः।



राज्ञी लीलावती काभिश्चित् सखीभिः, कैश्चित् सैनिकैः च सह रहस्यमार्गेण प्रेषिता आसीत् राज्ञा। सा कथञ्चित् पितुः चम्पकराजस्य समीपं गतवती।

राज्यात् च्युतः शूरसेनः अरण्ये अटति। कदाचित् सः भिल्लराजस्य साहाय्यं प्रार्थयितुं गच्छन् आसीत्। एवं गमनसमये मार्गे तेन कश्चन ज्योतिषिकः दृष्टः। तं परितः बहवः सम्मिलिताः आसन्। शूरसेनः अपि कुतूहलेन तस्य समीपं गतवान्। स्वस्य हस्तं ज्योतिषिकाय प्रदर्शितवान् च।

शूरसेनस्य हस्तं पश्यन् ज्योतिषिकः उक्तवान्– "राजयोगयुक्तः अयं हस्तः। भोः, चिन्ता मास्तु। मया दोषः कृतः इति खेदम् अनुभवन् अस्ति भवान्। शुभफलस्य योगः अस्ति। अचिरात् एव उत्तमं फलं प्राप्स्यति भवान्" इति।

'अविचार्य व्यवहरता मया दोषः कृतः' इति एतावत्पर्यन्तं खेदम् अनुभवन् आसीत् राजा। सः इदानीं ज्योतिषिकस्य वचनैः नवोत्साहम् आत्मविश्वासं च प्राप्तवान्। यावत् सः ततः गच्छन् आसीत् तावता ज्योतिषिकेण कञ्चित् कृषिकम् उद्दिश्य उच्यमानं वचनं तेन श्रुतम्– "भोः, भवतः हस्तः चक्रवर्तिनः हस्तः इव अस्ति। दारिद्र्यविषये भवतः चिन्ता खलु? अचिरात् एव भवान् इन्द्रभोगं प्राप्स्यति" इति।

एतत् वचनं श्रुत्वा मनसि एव हसन् राजा ततः भिल्लराजस्य समीपं प्रस्थितवान्। अनन्तरम् अल्पे एव काले शूरसेनः



भिल्लराज्यस्य सेनया सह विकर्णस्य उपरि आक्रमणं कृतवान्। शूरसेनस्य श्वशुरः चम्पकराजः अपि सेनया सह आगत्य शूरसेनेन मिलितवान्। एतस्मिन् युद्धे विकर्णः पराजितः अभवत्। गान्धारराज्यं कलिङ्गराज्यं चापि शूरसेनस्य अधीनं जातम्।

एवं राज्यद्वयस्य राजा सन् शूरसेनः कदाचित् मल्लिकां स्वसमीपम् आहूय— "मल्लिके! भवत्याः स्वामिनः विकर्णस्य राज्यं कलिङ्गम् अपि इदानीं मदधीनम् अस्ति इति भवती जानाति खलु?" इति कठोरस्वरेण पृष्टवान्।

"जानामि" इति भावं शिरश्चालनेन सूचयन्ती मल्लिका शिरः अवनमय्य मौनं स्थितवती।

"तर्हि अन्योऽपि विषयः ज्ञातव्यः भवत्या। इतःपरं भवती केवलं शूरसेनस्य मम आस्थानस्य नर्तकी कलावित् च। स्मरतु एतत्" इति उक्तवान् शूरसेनः।

'मया कठोरं दण्डनं प्राप्तव्यं स्यात्' इति आलोचितवती मल्लिका एतत् श्रुत्वा आश्चर्यचकिता। सा कृतज्ञताभावेन शूरसेनं साष्टाङ्गं नमस्कृत्य अश्रुभिः तदीयौ पादौ आर्द्रीकृत्य ततः निर्गतवती।

अनन्तरं राजा तं ज्योतिषिकं भटद्वारा आनाय्य आज्ञापितवान्— "भोः, भवान् ज्योतिषिकः भवितुम् अनर्हः। भवन्तं सैन्ये भटरूपेण नियोजितवान् अस्मि। अद्यैव सैन्यं प्रवेष्टव्यं भवता" इति। तत्क्षणे एव तस्मै भटवेषं दापितवान् च।

एतावदेव न, सः तद्दिने एव सर्वत्र नियमं श्रावितवान् यत् मार्गपार्श्वे हस्तसामुद्रिककथकाः शुकशकुनकथकाः ये केऽपि दृष्टाः चेत् ते दण्ड्यन्ते इति। तेन एतदपि उद्घोषितं यत् ये ज्योतिषं शास्त्ररूपेण अध्येतुम् इच्छन्ति तेभ्यः विशेषव्यवस्था उपकल्प्यते इति। एतेन मार्गपार्श्वे उपविश्य 'वयं ज्योतिषफलं कथयामः' इति वदन्तः तस्मिन् राज्ये न दृश्यन्ते स्म।

वेतालः एवं कथां समाप्य अवदत्— "राजन्! विचित्रा प्रवृत्तिः खलु शूरसेनस्य?

या वञ्चितवती तां मल्लिकां सत्कृतवान् सः नवोत्साहदातारं ज्योतिषिकं भटस्थाने नियोजयन् दण्डितवान्। एतत् किमर्थम्? किं सः मल्लिकायाः सौन्दर्येण वशीकृतः आसीत्? अथवा पक्षपातः एव तस्य स्वभावः? एतेषां प्रश्नानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "शूरसेनस्य प्रवृत्तिः योग्या एव अस्ति। सः विवेकी एव, त तु दुर्बलः। ज्योतिषिकः कृषिकं प्रति यत् उक्तवान् तेनैव ज्ञायते यत् सः ज्योतिःशास्त्रं सर्वथा न जानाति इति। महाराजं प्रति तेन यत् उक्तं तत् काकतालीयन्यायेन यथार्थं जातं, तावदेव। तादृशाः धनसम्पादनेच्छया यत् कथयन्ति ततः बहूनाम् अहितम् एव सिध्यति। बहूनां मानसिकं स्थैर्यम् अपगतं भवेत् अपि। तादृशानां कारणतः ज्योतिःशास्त्रस्य विषये अगौरवभावना अपि वर्धते। अतः एव तं तद्योग्यतानुगुणं भटोद्योगे नियोजितवान् राजा। शास्त्रस्य अगौरवकारिणीं तां प्रवृत्तिं निषिध्य शास्त्राध्ययनं प्रोत्साहितवान् सः।

मल्लिकायाः विषये अपि तेन युक्तम् एव आचरितम्। मल्लिका अपूर्वा कलावित् इत्यत्र नास्ति सन्देहः। राजा च कलापोषकः। कलिङ्गराजः तु ताम् अनुचिते कर्मणि नियोजितवान् आसीत्। मल्लिका शूरस्य हस्ते स्थितः खड्गः इव। खड्गः सदा प्रकाशते। किन्तु कदापि अन्यस्य उपरि स्वयम् आक्रमणं कर्तुं नार्हति। आश्रयदातुः आदेशानुगुणं पराधीनया तया व्यवहरणीयम् आसीत् एव। अतः तया गूढचर्यं कृतम् आसात्। एतत् जानन् शूरसेनः तस्याः कलाभिज्ञतायाः सदुपयोगं स्वीकर्तुम् इच्छन् ताम् आस्थानकलाविदं कृतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# बलहीनता

कस्मिंश्चित् राज्ये पूर्वं कश्चन राजा आसीत्। सः यदा न्यायनिर्णयं करोति तदा कश्चन शुकः आगत्य– "साधु, महाराज!" इति उक्त्वा गच्छति स्म। सः शुकः देवताभिः प्रेष्यते इति जनाः भावयन्ति स्म।

तस्मिन् देशे कश्चन वञ्चकः आसीत्। कदाचित् सः चिन्तितवान् यत् पुनः पुनः अल्पायाः वञ्चनायाः प्रयोगस्य अपेक्षया महत्या वञ्चनया प्रभूतं धनं सम्पादितं चेत् आजीवनं सुखेन स्थातुं शक्येत इति।

अतः सः महाधनिकस्य कस्यचित् समुद्रवणिजः गृहे उद्योगं प्राप्तवान्। स्वचातुर्येण विश्वासम् अपि सम्पादितवान्।

कदाचित् सः वणिजम् उक्तवान्– "श्रीमन्! श्वः अस्माकं नौकास्थानकं प्रति सुगन्धद्रव्ययुक्ता महानौका आगमिष्यति। भवान् मह्यं किञ्चित् धनं ददाति चेत् अहम् अधिकं लाभं सम्पाद्य आगमिष्यामि" इति।

"भोः, एतेन वाणिज्येन विशेषलाभः न प्राप्यते" इति उक्तवान् वणिक्।

तथापि एषः वञ्चकः पुनः पुनः प्रार्थयन् कथञ्चित् ततः धनं प्राप्तवान्। कांश्चन नटान् वणिग्वेषेण नौकास्थानकं प्रति प्रेषितवान्। ते वेषधारिणः सुगन्धद्रव्यवणिजः उक्तवन्तः यत् इदानीं सुगन्धद्रव्यस्य मूल्यं नितरां न्यूनम् इति। बहूनां वचनस्य श्रवणस्य अनन्तरं ते नूतनाः वणिजः एतस्मिन् विश्वसितवन्तः। अन्ते एषः वञ्चकः नौकास्थानकं गत्वा अल्पेन मूल्येन सुगन्धद्रव्याणि सर्वाणि क्रीत्वा अधिकेन मूल्येन राजधान्यां विक्रीय अधिकं लाभं सम्पाद्य यजमानाय दत्तवान्।

अनन्तरं कदाचित् सः वणिक् एतम् आहूय– "भोः, अद्य माणिक्यैः पूर्णाः नौकाः नौकास्थानकम् आगमिष्यन्ति। पूर्वं यथा कृतं तथैव कृत्वा इदानीम् अपि अधिकं लाभं

सम्पाद्य आगच्छतु" इति उक्त्वा एतस्मै अधिकमूल्यकं धनग्रन्थिं दत्तवान्।

एतादृशम् एव अवकाशं प्रतीक्षमाणः वञ्चकः तत् धनं स्वीकृत्य ततः पलाय्य अन्यत् नगरं गतवान्। तत्र सः धनिकस्य कवेः गृहे उद्योगं प्राप्तवान्।

कदाचित् वार्तालापसन्दर्भे वञ्चकः कविम् उक्तवान्– "भवान् स्वयोग्यतानुगुणं कीर्तिं तु न प्राप्तवान्। भवतः नाम राजास्थाने अपि यथा श्रूयेत तथा कर्तुं कश्चन मार्गः अस्ति" इति।

"कः सः मार्गः?" इति पृष्टवान् कविः।

"यदि भवान् किञ्चित् धनव्यय कर्तुं सिद्धः तर्हि कार्यम् अहं साधयिष्यामि। भवतः सम्माननं व्यवस्थाप्य भवदीय नाम सर्वत्र प्रसारयिष्यामि" इति उक्तवान् वञ्चकः।

सम्माननाशया कविः वञ्चकाय प्रभूतं धनं दत्तवान्। वञ्चकः सम्माननसभायाः आयोजनव्याजेन जनेभ्यः अपि प्रभूतं धनं सङ्गृह्य ततः पलाय्य राजधानीं प्राप्तवान्।

तत्र सः राजास्थाने उद्योगं प्राप्तुं प्रयतमानस्य कस्यचित् मैत्रीं सम्पादितवान्। कदाचित् तम् उक्तवान् एषः वञ्चकः– "भोः, एवं वृथा कालयापनेन किम्? राजास्थाने उद्योगः प्राप्तव्यः चेत् विशिष्टं तन्त्रम् आश्रयणीयं भवति" इति।

"किं करोमि? यदि प्रमुखस्य कस्यचित् परिचयः मम स्यात् तर्हि एतावता मया राजोद्योगः प्राप्तः अभविष्यत्" इति खेदेन उक्तवान् सः युवकः।



"राजस्थाने मम परिचिताः सन्ति एव। भवान् धनव्ययं कर्तुं सिद्धः चेत् ततः उद्योगं दापयिष्यामि" इति उक्तवान् वञ्चकः।

एवं तस्मात् युवकतः प्रभूतं धनं स्वीकृत्य राजधानीतः पलायनार्थम् उद्युक्तः सः। किन्तु दौर्भाग्यवशात् राजभटैः सः बद्धः अभवत्। विचारण प्रवृत्ता। वञ्चकेन कृताः सर्वाः वञ्चनाः तत्र प्रकाशिताः अभवन्। राजा वञ्चकं कठोरकारागारवासेन दण्डितवान्। तत्र सम्मिलिताः सर्वे राज्ञः निर्णयं श्रुत्वा हर्षोद्गारं कृतवन्तः। किन्तु तदा तत्र उपस्थितः शुकः तु मौनम् अतिष्ठत्।

एतत् दृष्ट्वा राजा क्षणकालं गम्भीरं चिन्तितवान्। अनन्तरं सः उद्घोषितवान् यत् ये त्रयः तेन वञ्चिताः आसन् ते अपि सामान्यकारागारवासेन दण्ड्यन्ते इति। तदा शुकः 'साधु महाराज!' इति उक्त्वा ततः निरगच्छत्।

"महाप्रभो! तेन वञ्चकेन वञ्चिताः वयम्। पुनः अस्माकं दण्डनं किमर्थम्?" इति समुद्रवणिक्, कविः, उद्योगाकाङ्क्षी च पृष्टवन्तः क्रोधेन।

राजा समुद्रवणिजं पश्यन् उक्तवान्– "भोः, सुगन्धद्रव्याणां विक्रयणेन प्राप्तः लाभः अन्याय्यात् इति जानन् अपि तादृशम् एव कार्यं कर्तुं भवान् उद्युक्तः यत् तत् भवतः दोष;" इति।

अनन्तरं कविं पश्यन् सः उक्तवान्– "प्रसिद्धिप्राप्त्यर्थं वञ्चकाय धनं यत् दत्तवान् भवान् तत् अनुचितम्। कीर्तिं धनेन क्रेतुं न शक्नुमः वयम्" इति।

ततः युवकं पश्यन् सः– "उचितायां योग्यतायाम् असत्याम् अपि वाममार्गेण उद्योगं प्राप्तुं प्रयत्नं कृतवान् भवान्। अतः भवान् दण्डार्हः" इति उक्तवान्।

एतत् श्रुत्वा त्रयः अपि लज्जया शिरः अवनमय्य स्थितवन्तः। यस्यां बलहीनता न भवति तं कोऽपि वञ्चकः कथम् अपि वञ्चयितुं न शक्नोति। दुर्बलाः एव वञ्चकैः वञ्चिताः भवन्ति। एवं खलु?



## चन्दमामानुबन्धः-१२

# ज्ञानभाण्डागारम्

## सा का स्यात्?

देशसञ्चारशीलः कश्चन संन्यासी किञ्चन गृहम् अतिथिरूपेण आगतवान्। संन्यासिनः आगमनेन सन्तुष्टाः गृहसदस्याः श्रद्धया स्वागतीकृत्य तं सत्कृतवन्तः। तेषाम् आतिथ्येन सन्तुष्टः संन्यासी तस्मिन् गृहे कानिचन दिनानि यावत् स्थितवान्। तस्मिन् समये गृहस्वामिनः पुत्री श्रद्धया अहोरात्रं संन्यासिनः सेवां कृतवती। संन्यासिनः पादमूले उपविशन्ती तस्य मुखात् बह्वयः कृष्णलीलासम्बद्धाः कथाः श्रुतवती। संन्यासिनः समीपे स्थितां कृष्णप्रतिमां पश्यन्ती सा भावपरवशा भवति। प्रतिमां पश्यन्ती सा गायति, नृत्यति च।

कदाचित् उषःकाले एव संन्यासी ततः निर्गतवान्। निद्रातः उत्थिता सा बालिका तं संन्यासिनं, प्राणप्रियां प्रतिमां च अपश्यन्ती रोदनम् आरब्धवती। 'विग्रहप्राप्तिं विना जलबिन्दुम् अपि न स्वीकरोमि अहम्' इति रुदती उक्तवती सा। तां सान्त्वयितुं कोऽपि न शक्तवान्।

ततः निर्गतः संन्यासी तस्मिन् दिने रात्रौ मार्गपार्श्वे कस्मिंश्चित् मन्दिरे सुप्तवान्। सः स्वप्ने प्रतिमानिमित्तं रुदतीं तां बालिकां दृष्टवान्। सः स्वप्ने एतदपि दृष्टवान् यत् कृष्णः तस्याः समीपं गन्तुम् इच्छां प्रकटयन् अस्ति इति। अतः सः झटिति तस्याः गृहं प्रतिगतवान्। विग्रहं तस्यै अर्पितवान् च।

वदन्तु, सा का स्यात्?

(उत्तरं ३६तमे पृष्ठे)

## अपि भवान् जानाति?

१. ब्रिटिश्राजपरिवारस्य आधीन्ये स्थितं प्राचीनकालीनं सुविख्यातं रत्नं किम्?
२. मुगलानाम् आक्रमणात् बहूनि वर्षाणि यावत् अहमद्नगरं रक्षितवती वीरनारी का?
३. स्वतन्त्रभारते अन्तिमतया विलयं प्राप्तः विदेशीयानाम् आधीन्ये स्थितः प्रदेशः कः?
४. समग्रे विश्वे अतीव लघुतमः मूषकः कः?
५. तस्य मूषकस्य भारः कियान्?
६. अत्यधिकविनाशकारकः भूकम्पः कदा कुत्र प्रवृत्तः?

(उत्तराणि ३६तमे पृष्ठे)

भारतं पूर्वम् इदानीं च–

# दण्डकारण्यम्




अनेकेषां पौराणिकानाम् ऐतिहासिकानां च घटनानां साक्षिभूतम् अस्ति दण्डकारण्यम्। एतत् प्राचीनकाले अनेकेषां महामुनीनां निवासस्थानम् आसीत्। एवं हि श्रूयते यत् अत्र राक्षसाः अपि निवसन्ति स्म इति। सीता-राम-लक्ष्मणाः कानिचन वर्षाणि एतस्मिन् अरण्ये स्थितवन्तः आसन्। तेषां वासतः अस्य बहूनि स्थानानि पवित्रीकृतानि सन्ति।

दण्डकारण्यस्य एकस्मिन् पार्श्वे गोदावरी, अपरस्मिन् पार्श्वे च नर्मदा प्रवहतः। मत्स्यकुण्डम्, इरावती, वंशधारा, नागावली, तमसा इत्यादयः नद्यः एतस्य अरण्यस्य द्वारा प्रवहन्ति। एतत् महारण्यम्, इदानीन्तनान् ओडिस्सा-मध्यप्रदेश-महाराष्ट्रान् आन्ध्रप्रदेशं च अभिव्याप्य आसीत्।

प्राचीने काले कदाचित् दण्डको नाम राजा एतस्मिन् अरण्ये सञ्चारं कुर्वन् आसीत्। तदा

तेन लावण्यवती मुनिकन्यका दृष्टा। तया आकृष्टः राजा कथञ्चित् तां वशीकर्तुं निश्चितवान्। किन्तु सा दण्डकं निराकृतवती। एतेन कुपितः दण्डकः तां बलात् वशीकर्तुम् उद्युक्तः। दण्डकतः आत्मानं रक्षन्ती सा ततः पलाय्य प्रवृत्तं समग्रं पितरं शुक्राचार्यं निवेदितवती। क्रुद्धः शुक्रः शापं दत्तवान् यत् तस्य राजधानी भस्मसाद्भवतु इति। एवं हि श्रूयते यत् अनन्तरक्षणे एव तदीयं नगरं अग्निज्वालाभिः आक्रान्तं सत् भस्मीभूतम् इति। कालान्तरे तत्र अरण्यं प्रवृद्धम्। एषः एव प्रदेशः दण्डकारण्यनाम्ना ख्यातः अभवत्।

अद्यतनं दण्डकारण्यं वनसम्पदः आकरः अस्ति। प्राकृतिकानि बहूनि रमणीयानि स्थलानि एतस्मिन् अरण्ये सन्ति। देशे सुनिश्चितरूपेण जलवाय्वोः कल्पने एतस्य अरण्यस्य महत्त्वपूर्णं पात्रम् अस्ति।

किन्तु एषु दिनेषु काष्ठच्छेदकानां कारणतः एतत् अरण्यं नश्यत् अस्ति। 'पूर्वघट्टाः' इति ख्याताः अत्रत्याः पर्वताः अपि ह्रासम् अनुभवन्तः सन्ति।

## उट्टङ्कने सर्वश्रेष्ठः

हिमाचलप्रदेशस्य सोलान्मण्डलस्य चियान्ग्रामस्य ४५ वर्षीयः राजिन्दर्सिंहनामकः दन्तवैद्यः उट्टङ्कनस्पर्धायां तृतीयवारम् अपि सर्वश्रेष्ठत्वं प्राप्तवान् अस्ति।

ड्रेस्टन् इत्यत्र प्रवृत्तायाम् अष्टादश्यां सर्वश्रेष्ठत्व-निर्णायकस्पर्धायां भागं वहन् सः स्वजन्मनः पञ्चभ्यः वर्षेभ्यः पूर्वं निर्मितेन रेमिंग्टन्यन्त्रेण प्रतिनिमेषं ४९९ अक्षराणि उट्टङ्कयन् स्वर्णपदकं प्राप्तवान् अस्ति।



# र स वा र्ताः



## श्वेतव्याघ्रस्य शिशुः

कलकत्तानगरीये अलिपुरप्राणिसङ्ग्रहालये ऐदम्प्राथम्येन जातं श्वेतव्याघ्रस्य शिशुं तस्य मातरं 'हिमाद्रि ज्यूनियर्' नामिकां च द्रष्टुम् एषु दिनेषु घण्टाद्वयं यावत् अवकाशः कल्पितः आसीत्। कृष्णपट्टिकाभिः युक्तः अयं व्याघ्रशिशुः मेमासे तृतीये दिनाङ्के जातः। जन्मनः अनन्तरं तृतीयवारं सूर्यकिरणस्पर्शम् अनुभवन् एषः व्याघ्रशिशुः पञ्जरे इतस्ततः सञ्चरति। एषः शिशुः सदापि मात्रा सहैव स्थाप्यते। तदीया माता अपि एतं विना स्थातुं न इच्छति।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. राबिन्सन् क्रूसोवर्यस्य समानतया स्थितः पुरषः कः?

२. आंग्लकवेः जार्ज् ईलियट्वर्यस्य वास्तविकं नाम किम्?

३. कः भारतीयः विश्वविद्यालयः विशालेन ग्रन्थालयेन युक्तः आसीत्?

४. मौर्यवंशीयस्य चन्द्रगुप्तस्य कथां किंनामकं संस्कृतनाटकं परिचाययति?

५. प्लेटोवर्येण रचितस्य महोन्नतग्रन्थस्य नाम किम्?

६. प्लेटो कदा जीवति स्म?

# उत्तराणि

## सा का स्यात्?

महाभक्ता कवयित्री मीराबायी।

## अपि भवान् जानाति?

१. कोहिनूरुवज्रम्।

२. चान्दबीबी।

३. गोवा।

४. इटलीदेशीया एट्रनस्कान्मूषकः।

५. औन्सुपरिमाणस्य दशमः भागः।

६. ७४२ तमे वर्षे। ईजिप्ट्, पालस्तीना, सिरिया इत्येतेषां प्रायः ३०० नगराणि उध्वस्तानि अभवन्।

## साहितयज्ञानम्

१. अलेक्साण्डर्।

२. मेरिअन् इवान्स्।

३. नलन्दाविश्वविद्यालयः।

४. विशाखदत्तकृतं मुद्राराक्षसम्।

५. 'दि रिपब्लिक्'।

६. क्रि.पू.५-४ शतके।



# नेहरूकथा–१०

कारागारतः बहिः आगतः जवहरः अनारोग्यपीडितस्य पितुः दर्शनार्थं मसूरु गतवान्। पितुः आरोग्ये प्रगतिः दृष्टा। पिता पुत्रः च अलहाबाद् आगतवन्तौ। कदाचित् सायङ्काले जवहरः महति कृषिकसम्मेलने भाषणं कृतवान्।

सभायाः समाप्तेः अनन्तरं पत्न्या सह जवहरः पितुः दर्शनार्थं गतवान्। गृहस्य द्वारस्य समीपे एव स्थिताः आरक्षकाः जवहरं बन्दीकृत्य नीतवन्तः।





कमला नेहरू एकाकिनी अन्तः गतवती। पत्युः बन्धनवार्तां श्वशुरं निवेदितवती च। अकस्मात् प्रवृत्तया एतया घटनया मोतीलाल् दिग्भ्रान्तः। मौनं तिष्ठन् सः मनसि किमपि निर्णीतवान्।



झटिति उत्थितः सः कोपावेशेन उत्पीठिकां मुष्ट्या द्विवारं ताडितवान्। 'एवं वृथा शयनं कुर्वन् दुष्टानां दुराचारं सोढुम् अहं न शक्नोमि' इति गर्जितवान् सः। तदीया शारीरकशक्तिः दुर्बला चेदपि मानसिकी शक्तिः प्रबला एव आसीत्।

तेषु एव दिनेषु कांग्रेसनायकाः तत्र तत्र सभाम् आयोजयन्तः नेहरूबन्धनस्य प्रतिभटनं सर्वत्र स्यात् इति वदन्तः जनान् प्रेरयन्ति स्म। तादृशीः सभाः निवारयितुम् आरक्षकाः दण्डप्रहारं कृतवन्तः।





सर्वकारं विरुध्य ये व्यवहृतवन्तः तान् भाययितुम् आरक्षकैः न केवलं कारागारवासेन दण्डनम्, अपि तु कशाघातः अपि कृतः। एषः कशाघातः अवमानकरः आसीत्। शरीरस्य हानिकारकः अपि भवति स्म।

'कशाप्रहारः न करणीयः' इति वदन्तः नेहरू, तदनुयायिनः च चत्वारि दिनानि यावत् उपवासव्रतम् आचरितवन्तः। एतेन आरक्षकाणां पाशवी प्रवृत्तिः देशे सर्वैः ज्ञाता अभवत्।





कमला नेहरू अपि कांग्रेस्कार्येषु भागं वहन्ती कारागारवासं प्राप्तवती। "मम पतिम् अनुपदम् अनुसर्तुम् अहं सन्तोषं गर्वं च अनुभवामि। प्रजानाम् एतत् कार्यं निश्चयेन जयप्रदं स्यात् एव इति मम विश्वासः" इति उक्तम् अस्ति तया।

मोतीलालस्य आरोग्यं नितरां क्षीणा जाता। जवहरः कमला च बन्धविमुक्तौ जातौ। अनेकैः प्रमुखैः सह तौ मोतीलालं द्रष्टुं गतवन्तौ। गान्धीजी अपि तत्र आगतः।





"महात्मन्! मम इहलोकयात्रा समाप्तप्राया इति भाति। स्वातन्त्र्यप्राप्तिः मया न दृश्यते। किन्तु भवन्तः स्वातन्त्र्यं सम्पादयिष्यन्ति एव। तत्र मम सन्देहः एव नास्ति" इति गान्धिवर्यम् उक्तवान् मोतीलालः। गान्धीजी अनेकैः प्रकारैः तस्य सान्त्वनं कृतवान्।

एं.ए. अन्सारी, बि.एन्. चन्द्ररायु, जीवराज् मेहता इत्यादयः सुप्रसिद्धाः वैद्याः, ये च सुप्रसिद्धाः नायकाः अपि आसन्, बहुधा प्रयत्नं कृतवन्तः। तथापि मोतीलाल् नेहरू १९३१ तमे वर्षे फेब्रवरीमासस्य षष्ठे दिनाङ्के दिवं गतः। अन्तिमे क्षणे जवहरलाल् नेहरू तस्य माता च मोतीलालस्य पार्श्वे एव आस्ताम्।





अलहाबादसमीपे गङ्गातीरे मोतीलालस्य भौतिकशरीरस्य अन्त्यसंस्काराः प्रवृत्ताः। एतां घटनां स्मरन् जवहरः लिखति यत् नदीतीरे हेमन्तऋतौ सायङ्काले, तत्र सम्मिलितानाम् अस्माकम् असङ्ख्यानां भारतीयानां च आप्तस्य तस्य भौतिकं शरीरम् अग्निज्वालाभिः दग्धम् अभवत् इति।

—(अनुवर्तते)




# न्यायप्राप्तिः

शान्तवीरः नाम कश्चन धनिकः पूर्वम् आसीत्। तस्य धनमदः अधिकः। कदाचित् सः कुत्रचित् प्रस्थितः आसीत्। मार्गे केचन बालकाः क्रीडन्तः आसीत्। केनचित् बालकेन ताडितं काष्ठकं शान्तवीरस्य पृष्ठभागे पतितम्। एतेन कुपितः शान्तवीरः तस्य बालकस्य दिशि धावितवान्। तावता सः बालकः पलायितवान् आसीत्।

तत्रत्यान् अन्यान् बालकान् पृष्टवान् शान्तवीरः– "सः बालकः कः?" इति।

"सः कण्डोलकारस्य विनयराजस्य पुत्रः" इति उक्तवान् कश्चन बालकः।

शान्तवीरः ततः साक्षात् विनयराजस्य गृहं गत्वा विनयराजम् उक्तवान्– "भवतः पुत्रः मां ताडितवान्। तम् अत्र आनयतु" इति।

"सः भवन्तं बुद्ध्या न प्रहृतवान्। क्रीडन् आसीत् सः। प्रमादवशात् काष्ठकं भवतः पृष्ठभागे पतितम्। बालः खलु सः? क्षमाम् अर्हति" इति उक्तवान् विनयराजः।

"मां गच्छन्तं दृष्ट्वा अपि सः मम दिशि काष्ठकं प्रेरयन् मां ताडितवान्। अतः मया अपि सः ताडनीयः एव। आनयतु तम् अत्र" इति कोपेन उक्तवान् शान्तवीरः।

तदा विनयराजः– "भोः, अल्पस्य विषयस्य पर्वतीकरणं न उचितम्। तथापि भवान् दण्डनम् एव इच्छति चेत् न्यायाधीशस्य समीपं गच्छतु। सः यथा वदति तथा भवतु" इति उक्तवान्।

एतेन शान्तवीरस्य कोपः प्रवृद्धः। सः ततः न्यायाधीशस्य समीपं प्रस्थितवान्। एवं गमनसमये मार्गे शरणः नाम कश्चन परिचितः मिलितवान्। सः शान्तवीरं पृष्टवान्– "किं श्रीमन्, कोपेन सहितः इति भाति भवान्?" इति। प्रवृत्तं सर्वं निवेदितवान्

शान्तवीरः।

तदा हसन् उक्तवान् शरणः–"श्रीमन्, कोपः प्रथमः शत्रुः इति वचनं न श्रुतं वा भवता? अल्पः बालः क्रीडन् कमपि दोषम् आचरितवान् चेत् तत्र क्षमा प्रदर्शनया। गृहं गत्वा शान्ततया सर्वं परिशीलयतु। तदा भवान् एव एतत् स्वयं जानाति" इति।

तदा शान्तवीरः इतोऽप्यधिकं कोपं प्राप्य– "महापुरुषः भवान् मां हितम् उपदिशति खलु? भवादृशानां कारणतः इदानीं ग्रामे धनिकानां विषये गौरवम् एव अपगतम् अस्ति" इति उक्तवान्।

"एवं तर्हि न्यायाधीशस्य समीपं गमनम् एव वरम्। गच्छतु भवान् तत्र एव" इति उक्त्वा ततः निर्गतवान् शरणः।

शान्तवीरः न्यायाधीशस्य समीपं गत्वा प्रवृत्तं समग्रं निवेदितवान्। तत् श्रुत्वा न्यायाधीशः हसन् उक्तवान्– "भोः, अल्पस्य बालस्य विषये एतावान् कोपः किमर्थम्? जनाः उपहसेयुः अत्र" इति।

"भवतः हितोपदेशं श्रोतुम् अहम् अत्र न आगतः। न्यायं सम्प्रार्थ्य अत्र आगतवान् अस्मि" इति उक्तवान् शान्तवीरः।

"श्रीमन्! एतादृशः अल्पः विषयः मत्पर्यन्तं न आगच्छेत्। ग्रामप्रमुखः शरणः अस्ति खलु? तं प्रथमं पश्यतु" इति उक्तवान् न्यायाधीशः।

"तं दृष्ट्वा एव अत्र आगतः अस्मि। सः अपि मां नीतिम् उपदिष्टवान्, तावदेव। अहं तु न्यायम् इच्छामि" इति उक्तवान्



शान्तवीरः।

"एवं वा? शरणम् अहं वदामि। भवान् न्यायं यथा प्राप्नुयात् तथा करोमि" इति वदन् शरणम् आनायितवान् न्यायाधीशः।

"शरणार्य! शान्तवीरः भवन्तं न्यायं प्रार्थितवान् चेत् भवान् नीतिम् उपदिष्टवान् इति श्रुतम्। न्यायनिर्णयं कर्तुं किं भवान् न शक्नोति?" इति पृष्टवान् न्यायाधीशः।

"अहं न शक्नोमि इति न। शान्तवीरः मम आत्मीयः। केन तस्य हितं सिध्यति इति अहं जानामि। अतः नीतिम् उपदिष्टवान्। यदि न्यायमार्गः एव अनुसरणीयः इति अस्ति तर्हि सम्भाव्यमानम् अपमाननम् अपि सोढव्यं भवेत् तेन" इति उक्तवान् शरणः।

"यः मां ताडितवान् तम् अहं ताडयामि चेत् दोषः कः? ताडितवतः प्रतिताडनं युक्तम् एव। तादृशम् एव न्यायम् इच्छामि अहम्" इति उक्तवान् शान्तवीरः।

"एवं तर्हि बालकेन येन क्रमेण एषः ताडितः– तेनैव क्रमेण एतेन बालकः ताडनीयः। अतः दाण्डाक्रीडायाः व्यवस्था भवतु नाम। एषः क्रीडन् काष्ठकेन बालं ताडयतु" इति उक्तवान् शरणः।

एतत् श्रुतवतः शान्तवीरस्य मुखं विकसितम्। किन्तु क्षणकालस्य अनन्तरं सः सन्देहं प्रकटितवान्– "भवतः कथनं युक्तम् एव। किन्तु मम ताडनसमये बालकः पलायनं करोति चेत् किं करणीयम्?" इति।

"बालकः पलायनं यथा न कुर्यात् तथा द्वयोः बलशालिनोः ग्रहणं व्यवस्थापयामि।



किन्तु भवतः काष्ठकप्रहारः बालस्य उपरि केवलं पतेत्, न तु अन्यस्य उपरि" इति सूचितवान् शरणः।

"तर्हि बालकः अविचलः यथा तिष्ठेत् तथा करोतु। द्वयोः ग्रहणं मास्तु" इति उक्तवान् शान्तवीरः।

"तथा कर्तुं शक्येत वा इति तु परिशीलनीयम्। बालः भीत्या पलायनं करोति चेत् वयं किं वा कर्तुं शक्नुयाम?" इति उक्तवान् शान्तवीरः।

अनन्तरदिने न्याय्यस्य दण्डनस्य व्यवस्थार्थं दाण्डाक्रीडा उपकल्पिता। एतत् द्रष्टुं ग्रामीणाः सर्वे सम्मिलिताः। विनयराजस्य पुत्रः अङ्गीकृतवान् आसीत् यत् अहम् अविचलः स्थास्यामि इति।

गर्ते प्रेरकदण्डं स्थापयित्वा काष्ठकं सम्प्रेर्य पुनः दण्डाघातेन काष्ठकं लक्ष्यं प्रति प्रेषणीयं शान्तवीरेण। शान्तवीरः त्रिवारं तथा प्रयत्नं कृतवान्। तथापि सः असफलः एव।

"अलं क्रीडया। प्रतीकारसाधनार्थम् अवकाशत्रयं दत्तम्। प्रतिपक्षीयस्य दण्डने शान्तवीरस्य एव असामर्थ्यम्" इति हसन् घोषितवान् शरणः।

एतत् श्रुत्वा तत्र सम्मिलिताः सर्वे हसितवन्तः। अनन्तरं शरणः विनयराजपुत्रं स्वसमीपम् आहूय पृष्टवान्– "भोः, भवतः धैर्यं तु प्रशंसार्हम् एव। एवं धैर्यवान् भवान् तद्दिने यदा शान्तवीरः अनुसृत्य आगतः तदा किमर्थं पलायितवान्?" इति।

तदा विनयराजपुत्रः उक्तवान्– "तद्दिने अहं यदि तेन गृहीतः स्यां तर्हि तेन सम्यक् ताडितः अभविष्यम्। अद्य तु भिन्ना कथा। तेन न्याय्येन क्रमेण अहं ताडनीयः। सः तथा ताडयितुं न शक्नोति इति अहं जानामि स्म। तदीये बाल्ये सः कदापि दण्ड-शिलादिना फलादिकं पातयितुं न शक्नोति स्म इति मया पितुः मुखात् श्रुतम् आसीत्। अतः एव एवं धैर्येण स्थितवान्" इति।

एतत् श्रुत्वा जनाः पुनरपि हसितवन्तः। शान्तवीरः शिरः अवनमय्य स्थितवान्।






बाणासुरस्य रथः सहस्रयोजनदीर्घः आसीत्। प्रबलाः सहस्रम् अश्वाः तस्य वाहकाः आसन्। भल्लूकचर्मणा एतस्य रथस्य आवरणं कल्पितम् आसीत्। मयूरलाञ्छनेन युक्ता रक्तवर्णीया पताका रथस्य उपरि शोभते स्म। रथस्य अन्तः गदाः, धनूंषि, बाणाः, परिघाः, मुसलं, कुन्ताः, खड्गाः, क्रकचाः इत्यादीनि असङ्ख्यानि आयुधानि आसन्। कुम्भाण्डः तस्य रथस्य सारथिः आसीत्।

राक्षससेनया अनुगम्यमानः बाणः अनिरुद्धस्य उपरि आक्रमणं कृतवान्। महत्या सेनया आगतं बाणासुरं दृष्ट्वा अपि अनिरुद्धः किञ्चिदपि न भीतः। सः धैर्येण साक्षात् बाणस्य रथस्य अभिमुखम् अग्रे गतवान्।

अनिरुद्धस्य गमनं यदि कोऽपि पश्येत् तर्हि सः चिन्तयेत् यत् अग्निसमीपं गच्छन् शलभः इव दृश्यते अयम् इति। अनिरुद्धः तु रथेन आकृष्यमाणः इव अग्रे सरन् अस्ति।

एकेन एव आयुधेन सह एकाकितया आगच्छन्तम् अनिरुद्धं दृष्ट्वा बाणः हसितवान्। सः राक्षसान् आदिष्टवान्– "किं पश्यन्ति भवन्तः? एतम् उन्नीय पार्श्वे क्षिपन्तु" इति। एवं वदन् एव सः बाणवर्षणम् अपि कृतवान्।

बाणस्य बाणवर्षणं सर्वथा अवगिणयन् अनिरुद्धः खड्गम् एव चक्राकारेण वर्तयन् बाणान् लीलया छेदयन् अग्रे गतवान्। कश्चित् अरण्ये कण्टकमयं गुल्मं यथा

२६. अनिरुद्ध-बाणासुरयोः युद्धम्।



कर्तयन् मार्गं कल्पयन् अग्रे गच्छति तथा अनिरुद्धः सम्मुखम् आगतान् राक्षसान् इतस्ततः निवारयन् पुनरपि अग्रे गतवान्। अजगणस्य उपरि व्याघ्रः यथा आक्रमणं करोति तथा बाणसुरस्य रथस्य वाहकानाम् अश्वानाम् उपरि आक्रमणं कृतवान् अनिरुद्धः।

अनिरुद्धस्य खड्गप्रहारेण अश्वाः मृताः भवन्ति। रक्तं तु धाराकारेण प्रवहति। बाणः अपि अनिरुद्धस्य उपरि बहुविधानि आयुधानि निरन्तरं प्रयुक्तवान्। आयुधानां मध्ये अनिरुद्धः अदृश्यः अभवत्। सः मृतः एव इति भावयन्तः राक्षसाः हर्षोद्गारं जयघोषं च कृतवन्तः।

किन्तु अनिरुद्धः क्षणाभ्यन्तरे आयुधानि अपसारयन् उत्प्लुत्य अग्रे आगतवान्। पुनरपि संहारकार्यम् आरब्धवान् च। एतत् दृष्ट्वा चकितः क्रुद्धः च बाणः महाशक्तिम् उन्नीय अनिरुद्धं लक्ष्यीकृत्य प्रयुक्तवान्। अनिरुद्धः तु तां महाशक्तिं हस्तेन गृहणन् बाणं लक्ष्यीकृत्य प्रतिप्रेषितवान्।

तत् शक्त्यायुधं बाणस्य उरसः अस्थिपञ्जरं भित्त्वा पृष्ठभागतः बहिरागत्य भूमौ अपतत्। एतेन आघातेन बाणः ध्वजस्तम्भं गृहणन् तत्रैव पतितवान्।

सारथिः कुम्भाण्डः बाणं शैत्योपचारेण उपचर्य सचेतनं कृत्वा– "अयं शत्रुः असामान्यशक्तिशाली अस्ति। प्रपञ्चः एव प्रतिपक्षरूपेण आगतः चेदपि एषः भीतः न भवति। एतस्य धैर्यसाहसादिकं प्रत्यक्षं दृष्टवान् खलु भवान्? एतं पराजेतुं सुलभतया न शक्यते। इदानीं भवान् प्राणरक्षणोपायं यदि न चिन्तयेत् तर्हि एषः राक्षसकुलम् एव समूलं नाशयेत्" इति उक्तवान्।

तदा बाणः कुम्भाण्डं मन्दहासपूर्वकं दृष्ट्वा– "भोः, पश्यतु तावत्। गरुत्मान् सर्पम् इव अहम् एतम् उद्धतं बालं बन्धने स्थापयामि" इति उक्त्वा ततः अदृश्यः अभवत्।

बाणः कुत्र गतः इति अनिरुद्धः इतस्ततः पश्यन् स्थितवान्। तावता कृष्णसर्पमुखैः



बाणैः तदीयानि सर्वाणि अङ्गानि बद्धानि अभवन्।

तदा बाणः– "पश्यतु तावत्, अयम् उद्धतः इदानीं बद्धः अस्ति। एतम् इदानीं मम खड्गाय बलिरूपेण अर्पयिष्यामि। अन्यथा एतेन कृतम् अपमाननं कलङ्करूपेण चिरं तिष्ठेत्" इति कुम्भाण्डम् उक्त्वा खड्गम् उन्नीतवान्।

"भवता उक्तं युक्तम् एव। किन्तु भवता अन्यः अंशः अपि मनसि स्थापनीयः। एषः उषादेवीं गान्धर्वविधिना परिणीतवान् अस्ति। यदि एषः प्राणैः वियुक्तः भवेत् तर्हि उषादेवी वैधव्यदुःखम् आजीवनम् अनुभवेत्। अतः तस्याः मनः अपहर्तुं समर्थः एषः कुतः आगतः, किंनामा, इत्यादिकं प्रथमं ज्ञातव्यम्। एषः सामान्यः तु न इति एतावता अस्माभिः ज्ञातम् एव। एषः सौन्दर्येण, तेजसा, पराक्रमेण च देवान् अपि अतिशेते। अतः एषः कश्चन महात्मा स्यात् एव। महावीरेण भवता सह युद्धकरणे एतस्य भीतिः एव न आसीत्। एवं सर्पास्त्रेण बद्धोऽपि एषः एकवारम् अपि आर्तनादं न कृतवान्। असहायकतायाम् अपि तस्य मुखे दृश्यमानं क्रोधं पश्यतु तावत्। अयं वीरः भवतः योग्यः जामाता, अद्वितीयः प्रतिस्पर्धी, उषादेव्याः अनुरूपः पतिः च। एतादृशः अन्यः लोके न स्यात् एव। अतः युक्तायुक्ततां निर्णीय अग्रिमं पदं निदधातु भवान्" इति उक्तवान् कुम्भाण्डः।

कुम्भाण्डस्य वचनम् उचितं मन्यमानः बाणः– "भवदुक्तं सत्यम् एव। एतद्विषये पुनरपि आलोचयिष्यामि" इति उक्त्वा युद्धस्थगनार्थम् आज्ञाप्य अनिरुद्धस्य रक्षणार्थं राक्षसभटान् नियोज्य प्रासादं प्रति गतवान्।

तावता अनिरुद्धस्य समीपम् आगतः नारदः तस्मै केवलम् आत्मानं प्रदर्शयन्– "भवता यत् युद्धं कृतं तादृशं मया इतःपूर्वं न दृष्टम् एव। अहं गत्वा कृष्णम् आनेष्यामि। तावत् भवता एतत् कष्टं सोढव्यम्। चिन्तां न करोतु। सर्वं सुखान्तं भविष्यति" इति उक्त्वा ततः अदृश्यः अभवत्।

अनिरुद्धः यदा शिरः उन्नीय दृष्टवान् तदा



सः अश्रूणि निरन्तरं स्रावयन्तीम् उषादेवीं दृष्टवान्।

ताम् उषादेवीम् उक्तवान् सः– "भवत्याः पिता मया सह अभिमुखं युद्धं कर्तुम् अशक्नुवन् वञ्चनया मां बद्धवान् अस्ति। तथापि न काऽपि चिन्ता मम। मां कष्टात् उद्धर्तुं कृष्णः अस्ति। यः स्वीयेन सुदर्शनचक्रेण असङ्ख्यान् राक्षसान् संहृतवान् सः मम पराभवं कथं वा सहेत? भवती चिन्तां मा करोतु। भवत्याः पितुः अन्तिमदिनानि सन्निहितानि इति भावयतु। आवयोः शुभफलम् अचिरात् एव सेत्स्यति" इति।

अनन्तरम् अनिरुद्धः दुर्गादेवीं स्तुवन् भक्त्या तस्याः ध्यानं कृतवान्। अल्पे एव काले लोकेश्वरी सा तस्याः पुरतः प्रत्यक्षीभूय स्पर्शेण सर्पास्त्रबन्धम् अपनीय– "कृष्णः अचिरात् एव आगत्य बाणं पराजित्य उषया सह स्थितं भवन्तं द्वारकां नेष्यति" इति उक्त्वा अन्तर्हिता अभवत्।

अत्रान्तरे द्वारकायां महान् कोलाहलः प्रचलन् आसीत्। चित्ररेखा मायया अनिरुद्धं नीतवती खलु? तदनन्तरं जागरिताः अनिरुद्धस्य पत्न्यः पतिं तत्र कुत्रापि अपश्यन्त्यः रोदनम् आरब्धवत्यः।

अनिरुद्धप्रासादात् आगतं स्त्रीणाम् आर्तनादं श्रुत्वा नगरस्थाः यादवप्रमुखाः गृहात् बहिः आगत्य "किं प्रवृत्तम्?" इति परस्परं पृच्छन्तः इतस्ततः धावितवन्तः। सभाभवने अपायसूचिका भेरी वादिता। अचिरात् एव कृष्ण-बलरामप्रभृतयः यादवप्रमुखाः सभाभवने सम्मिलिताः। अनिरुद्धम् अपश्यन्तः ते सर्वे चिन्ताक्रान्ताः जाताः। कृष्णस्य नेत्रे आर्द्रे जाते। एतत् पश्यन्तः तत्रत्याः सर्वे अव्यक्तया भीत्या पीडिताः जाताः।

तदा विकद्रुः नाम कश्चन यादवप्रमुखः कृष्णम् उक्तवान्– "कृष्ण! भवतः आश्रये यादवाः सर्वे सकुशलं सन्ति। देवेन्द्रः तु स्वक्षेमार्थं भवन्तम् आधारं मन्यते। एतादृशः भवान् अश्रुमुखः भवति चेत् सर्वे सहजतया खिन्नाः भवन्ति एव। भवता एव खलु सर्वेषां

धैर्यं वक्तव्यम्? भवान् एव अश्रूणि स्रावयति चेत् कथम्?" इति।

तदा कृष्णः– "मम तु महती चिन्ता अनिरुद्धस्य विषये। सः कुत्र गतः इति न ज्ञातं चेत् जनाः मद्विषये अन्यथा चिन्तयन्ति। प्रद्युम्नः यदा शिशुः आसीत् तदा कश्चन राक्षसः तम् अपहृतवान्। प्रद्युम्नः तु तं राक्षसं संहृत्य आगतः इत्यतः मम मानः रक्षितः अभवत्। इदानीं मम शत्रुः एव कश्चित् एतम् अपहृतवान् स्यात्। एषा सामान्या घटना तु न। अतः भवद्भिः सर्वैः एतद्विषये आलोचनीयम्। तदा एव कश्चन मार्गः स्फुरेत्" इति उक्तवान्।

अनिरुद्धस्य अन्वेषणार्थं सात्यकिः सर्वासु दिक्षु भटान् प्रेषितवान्।

उग्रसेनः अपि 'सर्वे अनिरुद्धस्य अन्वेषणार्थं विशेषप्रयत्नं कुर्युः' इति आदिश्य रथिकान्, अश्वारोहिणः, पादातान् च बहून् सैनिकान् विविधेभ्यः प्रान्तेभ्यः प्रेषितवान्।

तदा अनादृष्टिः नाम सेनापतिः 'वदेयं वा न वा' इति आलोचयन् अन्ते कृष्णम् उक्तवान्– "श्रीमन्! मम कश्चन सन्देहः अस्ति। देवाः इतःपूर्वं भवता बहुधा उपकृताः स्युः चेदपि पारिजातस्य आनयनसन्दर्भे इन्द्रः भवता पराजितः एव। अपमाननं सः कथमपि विस्मर्तुं न अर्हति। उपायचतुरः सः इन्द्रः अनिरुद्धं कुत्रापि नीतवान् स्यात् वा इति मम सन्देहः" इति।



कृष्णः तस्य वचनं श्रुत्वा हसन्– "देवेषु कोऽपि एतादृशं नीचकार्यं कर्तुं न अर्हति। एतत् राक्षसैः एव कृतं स्यात्। सर्वदा उपकर्तुं समर्थस्य मम अपकारः कृतः चेत् त्रिमूर्तयः कठोरं दण्डयेयुः इति देवाः जानन्ति एव। अतः देवैः एतादृशं कार्यं कृतं न स्यात्" इति उक्तवान्।

तदा अक्रूरः अपि कृष्णस्य एव वचनं समर्थितवान्।

"अनिरुद्धं कोऽपि पुरुषः अपहृतवान् न स्यात्। काऽपि दुष्टा स्त्री एतत् कृतवती स्यात्। यतः अनिरुद्धः लोकैकसुन्दरः। दैत्य-दानव-देवता-स्त्रियः बहुविधाः मायाः जानन्ति। ताः यत्र कुत्रापि गन्तुम् अर्हन्ति। यं



कमपि स्वायत्तीकुर्वन्ति। अतः अस्माभिः एतया दृष्ट्या अन्वेषणप्रयत्नः करणीयः" इति उक्तवान् कृष्णः।

अनिरुद्धम् अन्वेष्टुं गताः भटाः केषाञ्चित् दिनानाम् अनन्तरं प्रत्यागत्य स्वप्रयत्नस्य असाफल्यं निवेदितवन्तः।

अनन्तरदिने कृष्णः आलोचनामग्नः सन् एव सभां प्रविष्टवान्। उग्रसेनादयः सर्वे सभायाम् उपस्थिताः आसन्। तदा नारदः नारायणनाम जपन् सभां प्रविष्टवान्। नारदस्य आगमनेन समग्रा सभा कुतूहलिनी जाता।

अर्घ्यपाद्यादीनाम् अनन्तरं नारदः पृष्टवान्— "किम् एतत्? सर्वे चिन्ताक्रान्ताः सन्ति खलु। किमर्थम्? यादवसभायाः एतादृशी गतिः किमर्थम् आगता?" इति।

"अनिरुद्धस्य अदर्शनम् एव सर्वेषां चिन्तायाः कारणम्। सर्वत्र अन्वेषणं कृतम्। किन्तु सर्वे प्रयत्नाः विफलाः एव। अस्माकं सौभाग्यं यत् त्रिलोकसञ्चारी भवान् एतस्मिन् समये अत्र उपस्थितः" इति उक्तवान् कृष्णः।

"मया इतःपूर्वं बहूनि युद्धानि दृष्टानि। किन्तु बाणानिरुद्धयोः युद्धं यत् प्रवृत्तं तादृशं तु कुत्रापि न दृष्टम् आसीत्। अनिरुद्धस्य हस्ते स्थितं खड्गम्, उत सुदर्शनचक्रम् इति सन्देहः भवति स्म। बाणस्य पुत्री उषादेवी स्वप्ने दृष्टे अनिरुद्धे अनुरक्ता सती एतस्य सर्वस्य कारणभूता जाता। तस्याः प्रियसखी चित्ररेखा स्वमायाशक्त्या अत्र आगत्य अनिरुद्धं नीत्वा तौ मेलितवती। एतत् जानन् बाणः अनिरुद्धेन सह युद्धं कुर्वन् तीव्रं व्रणितः सन् मायायुद्धे सर्पास्त्रेण तं बद्धवान्। इदानीं भवता एव बाणस्य दर्पः भञ्जनीयः। बाणस्य शोणपुरम् इतः सुदूरे अस्ति। अतः भवता गरुडस्य साहाय्येन अविलम्बेन तत्र गन्तव्यम्। एतत् निवेदयितुम् एव अत्र आगतवान् अस्मि। साधयामि तावत्" इति उक्त्वा नारदः ततः निर्गतवान्।

कृष्णः अविलम्बेन गरुडं स्मृतवान्। गरुडः तु क्षणमात्रेण कृष्णस्य पुरतः प्रत्यक्षम् अभवत्।

कृष्णः, बलरामः, प्रद्युम्नः च गरुडम् आरूढवन्तः। गरुडः आकाशमार्गेण प्रस्थितवान्। यदा ते शोणपुरसमीपम् आगतवन्तः तदा अपूर्वं तेजः दृष्टवन्तः।

"तत् कीदृशं तेजः?" इति कृष्णं पृष्टवान् बलरामः।

"वयम् इदानीं बाणासुरस्य शोणपुरस्य समीपम् आगताः स्मः। एतस्य नगरस्य रक्षणार्थं शिवेन अग्नयः नियोजिताः सन्ति। अस्माभिः इदानीम् आहवनीयाग्निः दृष्टः। एतम् अग्निं गरुडः एव निवारयितुम् अर्हति" इति उक्तवान् कृष्णः।

अपरक्षणे गरुडः आकाशगङ्गायाः जलं मुखेन आनीय अग्नेः उपरि पातितवान्। अग्निः शान्तः जातः। कृष्णः श्लाघनेन गरुडं प्रोत्साहितवान्।

गरुडः अग्रे गतवान्। तावता शिवेन नियुक्ताः अग्नयः सिंहनादं कृतवन्तः। एतं नादं श्रुत्वा बाणः जागरितः अभवत्।

अत्रान्तरे आङ्गिरसः नाम प्रमुखः अग्निः ज्योतिष्टोम-विभाङ्गनामकाभ्याम् अग्निभ्यां सह, कृष्णेन सह युद्धं कर्तुम् अग्रे आगतवान्। इतरे अग्नयः तान् अनुसृतवन्तः।

तदा कृष्णः कोपेन आङ्गिरसम् अधिक्षिपन् उक्तवान्– "अये आङ्गिरस! मुनिभिः यागादिषु समर्पितैः आहुतिभिः दृप्तः अस्ति भवान्। अत एव युद्धार्थम् आगतः इति भाति। निर्गच्छतु इतः" इति।

आङ्गिरसः कोपेन– "वृथा वचनं किमर्थम्? प्राणान् रक्षतु प्रथमम्" इति उक्त्वा कृष्णं लक्ष्यीकृत्य शूलायुधं प्रयुक्तवान्।

कृष्णः स्वबाणेन तत् आयुधं मध्ये एव भञ्जयित्वा अपरेण बाणेन आङ्गिरसं व्रणितं कृतवान्। आङ्गिरसः रक्तं वमन् मूर्च्छां गतवान्। एतत् दृष्ट्वा अन्ये अग्नयः पलायनं कृतवन्तः। इदानीं अवरोधकः कोऽपि नास्ति।

एवम् अग्नीनां निर्गमनात् प्रतिरोधस्य अभावात् शोणपुरं स्फुटं दृष्टं कृष्णेन।





# योग्यः वरः

रामनाथपुरे रमेशः नाम कश्चन धनिकः आसीत्। लक्ष्मीदेवी तस्य एकमात्रपुत्री। सा रूपवती आसीत्।

यदा लक्ष्मीदेवी प्राप्तवयस्का जाता तदा रमेशः वरान्वेषणप्रयत्नम् आरब्धवान्। लक्ष्मीदेवीं परिणेतुम् इच्छन्तः युवकाः बहवः आसन्।

रमेशः तस्य पत्नी च इच्छतः यत् समानस्तरीयः सम्बन्धः एव भवतु इति। लक्ष्मीदेवी तु आर्थिकम् आनुकूल्यं न परिगणयति। विद्यावान् कश्चित् परिणेतव्यः इति तस्याः अपेक्षा।

रामनाथपुरस्य पार्श्वे स्थितस्य गङ्गापुरनामकस्य ग्रामस्य भूस्वामिनः कोटीश्वरस्य एकः एव पुत्रः। भूस्वामी कोटीश्वरः स्वयम् आगत्य रमेशं प्रार्थितवान् यत् मम पुत्राय भवतः पुत्री वधूरूपेण दातव्या इति।

एवम् एव नगरस्य प्रमुखः वज्रवणिक् सुवर्णपालः मध्यवर्तिद्वारा वार्ता प्रेषितवान् यत् मम ज्येष्ठपुत्राय भवतः पुत्री दातव्या इति।

रामनाथपुरे उपाध्यायवृत्त्या जीवतः देवनाथस्य विद्याधरः नाम पुत्रः अस्ति। सः शास्त्रपारङ्गतः। तथैव कृषिविषये वाणिज्यविषये च तेन बहवः ग्रन्थाः अधीताः आसन्। अतः बहवः मार्गदर्शनप्राप्त्यर्थं तस्य समीपम् आगच्छन्ति स्म।

एतं विद्याधरम् एव अहं परिणेतुम् इच्छामि इति कदाचित् मातापितरौ सूचितवती लक्ष्मीदेवी।

तदा रमेशः पुत्रीम् उक्तवान्– "लक्ष्मि, विद्याधरः पण्डितः जनप्रियः च इति अहं जानामि। किन्तु सः निर्धनः। इदानीं लोके



धनम् एव प्रधानम्। कोटीश्वरपुत्रः देवनाथस्य पुत्रः च पण्डितौ न स्यातां, किन्तु तयोः पित्रार्जिता सम्पत्तिः प्रभूतरूपेण अस्ति। पुत्रपौत्रादयः अपि सुखेन स्थातुं यथा शक्नुयुः तावत् ऐश्वर्यम् अस्ति तयोः। अतः विवाहविषये भवती पुनरपि विचिन्त्य वदतु'' इति।

तदा लक्ष्मीदेवी– ''तात! भवदुक्तम् अयुक्तम् इति अहं न भावयामि। अतः एवं भवतु। भवान् विद्याधरं, कोटीश्वरपुत्रं, देवनाथपुत्रं च गृहं प्रति आह्वयतु। अनन्तरं तान् पृथक् पृथक् आहूय मया सूच्यमानान् प्रश्नान् पृच्छतु। तेषाम् उत्तरस्य श्रवणस्य अनन्तरं योग्यः वरः कः इति भवान् एव निर्णीय वदतु'' इति उक्त्वा प्रष्टव्यान् प्रश्नान् अपि पितरं सूचितवती।

पुत्र्याः सूचनानुसारं रमेशः तान् त्रीन् अपि स्वगृहं प्रति आहूतवान्। तेषाम् आगमनानन्तरं भूस्वामिपुत्रं स्वप्रकोष्ठं प्रति आहूय पत्नीपुत्र्योः सम्मुखे पृष्टवान्– ''पितुः एकमात्रपुत्रः खलु भवान्। गृहस्य समग्रस्य व्यवहारं स्वयं निर्वोढुं सामर्थ्यम् अस्ति वा भवतः? दिने कियान् कालः एतदर्थं व्ययीकरणीयः भवेत्? अथवा भवान् अन्यम् आधारीकृत्य व्यवहारनिर्वहणं कर्तुम् इच्छति?'' इति।

तदा भूस्वामिपुत्रः उक्तवान्– ''एतादृशेषु अंशेषु मया चिन्तनीयं नास्ति एव। लिपिकाराः, सेवकाः, मार्गदर्शकाः च सन्ति एव खलु?'' इति।

''भवान् देवनाथस्य पुत्रं विद्याधरं जानाति खलु? लक्ष्मीदेवी यदि भवन्तं परिणयेत् तर्हि विद्याधरेण इव भवता पाण्डित्यं प्राप्तव्यं भवेत्। किम् एतत् शक्यम्?'' इति पृष्टवान् रमेशः।

''तत् कथं शक्येत श्रीमन्?'' इति आश्चर्येण पृष्टवान् भूस्वामिपुत्रः।

रमेशः तं प्रेषितवान्। अनन्तरं वणिजः सुवर्णपालस्य पुत्रम् आहूय पूर्वतनान् एव प्रश्नान् एतम् अपि पृष्टवान्।

भूस्वामिपुत्रेण यथा उत्तरं दत्तं तथैव उत्तरं दत्तं वणिक्पुत्रेण अपि।

अनन्तरं रमेशः विद्याधरम् आहूय पृष्टवान्– "भोः, भवान् कोटीश्वरपुत्रं, वणिजः सुवर्णपालस्य पुत्रं च जानाति एव खलु? यदि अहं भवते मम पुत्रीं दद्यां तर्हि भवान् तयोः समानम् ऐश्वर्यं सम्पादयितुं शक्नुयात् वा?" इति।

तदा विद्याधरः हसन् रमेशम् उक्तवान्– "स्वशक्त्या सम्पादनम् इति न, तावतः ऐश्वर्यस्य स्वामी तु भविष्यामि एव" इति।

एतत् श्रुत्वा नितराम् आश्चर्यम् अनुभवन् रमेशः पृष्टवान्– "तत् कथं शक्यते भोः?" इति।

"सम्पत्त्या प्रभावेण च भवान् कोटीश्वरस्य, सुवर्णपालस्य च समानः एव अस्ति खलु? लक्ष्मीदेवी भवतः एकमात्रपुत्री। अहं यदि तां परिणेष्यामि तर्हि सहजतया भवतः सम्पत्तेः उत्तराधिकारी भविष्यामि। अतः एव मया उक्तं, तयोः यावत् ऐश्वर्यं तावतः ऐश्वर्यस्य स्वामी भविष्यामि इति" इति उक्तवान् विद्याधरः।

एतेन उत्तरेण तृप्तः रमेशः पुत्र्याः मुखं पश्यन् मन्दहासं प्रकटितवान्। विद्याधरस्य निर्गमनस्य अनन्तरं लक्ष्मीदेवी पितरम् उक्तवती– "विद्याधरेण यत् उक्तं तत् अवगतं खलु? मां परिणयन् सः सम्पत्त्या कोटीश्वरपुत्रेण सुवर्णपालपुत्रेण च समः भविष्यति। अन्यच्च तयोः समीपे अविद्यमानम् अपूर्वं विद्याधनम् एतस्य समीपे अस्ति। तौ महता प्रयत्नेन अपि विद्याधरस्य यादृशं पाण्डित्यं तादृशं प्राप्तुं नार्हन्ति। विद्याधरः तु तयोः यावत् ऐश्वर्यं तावत् अन्यसाहाय्यं विना अपि प्राप्नुवन् पाण्डित्येन तौ अतिशेते। इदानीं भवान् एव वदतु– कः वरः योग्यः इति" इति।

"भवत्याः चिन्तनं युक्तम् एव। विद्याधरः एव योग्यः वरः" इति उक्तवन्तौ रमेशः तत्पत्नी च।

अनन्तरम् अल्पे एव काले शुभे मुहूर्ते देवनाथस्य पुत्रस्य विद्याधरस्य लक्ष्मीदेव्याः च विवाहः सवैभवं सम्पन्नः।





# वटवृक्षसाक्ष्यम्

कस्मिंश्चित् ग्रामे पूर्वं नारायणश्रेष्ठी नाम वणिक् आसीत्। सः कदाचित् कार्यविशेषस्य निमित्तं दूरस्थं कञ्चन ग्रामं गच्छन् आसीत्। मार्गे गुरुराजः नाम कश्चन कृषिकः मिलितः। सः नारायणश्रेष्ठिनं प्रार्थितवान्– "श्रेष्ठिवर्य! मम गृहं जीर्णम् अस्ति। वर्षाकालात् पूर्वं तत् न समीकृतं चेत् मया सकुटुम्बं वृक्षस्य अधः स्थातव्यं भवेत्। द्विशतं रूप्यकाणि सन्ति चेत् गृहस्य समीकरणं शक्येत। अतः तावत् धनं ददातु कृपया। धान्यविक्रयणस्य अनन्तरं वृद्धिसहितं तत् प्रत्यर्पयिष्यामि" इति।

नारायणश्रेष्ठिनः हृदयं नितरां कोमलम्। सः गुरुराजस्य प्रार्थनां तिरस्कर्तुम् अनिच्छन् स्वकोषे स्थितानि द्विशतं रूप्यकाणि दत्तवान्।

दिनानि गतानि। धान्यसङ्ग्रहणकालः अतीतः। किन्तु गुरुराजः नारायणश्रेष्ठितः स्वीकृतम् ऋणं न प्रत्यर्पितवान्। पुनः एकं वर्षम् अतीतम्।

कदाचित् नारायणश्रेष्ठी गुरुराजं स्वसमीपम् आहूय उक्तवान्– "गुरुराज! कुशलं खलु? मत्तः स्वीकृतम् ऋणं न प्रत्यर्पितवान् एव भवान्। द्वितीयं वर्षम् अपि अतीतम्" इति।

"ऋणम्? केन स्वीकृतम्? केन दत्तम्?" इति आश्चर्यं प्रकटयन् पृष्टवान् गुरुराजः।

"जीर्णस्य गृहस्य समीकरणार्थं द्विशतं रूप्यकाणि आवश्यकानि इति वदन् भवान् ऋणं स्वीकृत्य गतवान् खलु? किं तत् विस्मृतवान्? किम् एतत्?" इति उक्तवान् नारायणश्रेष्ठी।

"अहं विस्मृतवान् इति? स्यात् नाम। किन्तु ऋणस्वीकारसमये मया पत्रं लिखित्वा

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

दत्तं स्यात् खलु? तत् प्रदर्शयतु। ऋणं प्रत्यर्पयिष्यामि" इति उक्तवान् गुरुराजः।

"भवता ऋणं मार्गे पृष्टम्। भवतः दयनीयां दशां श्रुत्वा अहं ऋणं दत्तवान्। अल्पे एव काले प्रत्यर्पयिष्यामि इति उक्तवान् आसीत् भवान्। अतः पत्रं न स्वीकृतं मया" इति उक्तवान् नारायणश्रेष्ठी।

"अहो चित्रम्! वणिक् कश्चित् पत्रं विना ऋणं दद्यात् इत्यत्र को वा विश्वसिति? भवान् धनिकः स्यात् नाम। किन्तु एवं निर्धनस्य उपरि मिथ्यारोपणं तु न उचितम्। मयि ऋणभारम् आरोपयति खलु भवान्? अहो कालगतिः विचित्रा!" इति उक्तवान् गुरुराजः।

एतावता प्रतिवेशिनः सर्वे तत्र सम्मिलिताः। किं प्रवृत्तम् इति ते नारायणश्रेष्ठिनं गुरुराजं च पृष्टवन्तः। नारायणश्रेष्ठी प्रवृत्तं समग्रं निवेदितवान्। "एषः असत्यं वदन् अस्ति" इति उक्तवान् गुरुराजः। कः वञ्चकः इति अजानन्तः तत्रस्थाः उक्तवन्तः यत् ग्रामप्रमुखः एव एतां समस्यां परिहरेत्, अतः तस्य समीपं गमनम् एव वरम् इति।

अनन्तरं ते सर्वे ग्रामप्रमुखस्य समीपं गतवन्तः। ग्रामप्रमुखः नितरां चतुरः। मार्जारस्य पदम् अपि अन्वेष्टुम् अर्हति सः। नारायणश्रेष्ठिनः गुरुराजस्य कथनं सः आद्यन्तं श्रुतवान्।



"एतस्मात् अहं किमर्थं वा ऋणं स्वीकुर्याम्? वर्षद्वयात् पूर्वं मया जीर्णं गृहं समीकृतम् इति तु सत्यम् एव। किन्तु तत् धान्यविक्रयणात् प्राप्तेन धनेन कृतम्। यदि एषः मह्यम् ऋणं दत्तवान् स्यात् तर्हि मया लिखित्वा दत्तं व्यवहारपत्रं प्रदर्शयतु" इति उक्तवान् गुरुराजः।

ग्रामप्रमुखः नारायणश्रेष्ठिनं पृष्टवान्– "भवान् यदा ऋणं दत्तवान् तदा तत्र कः आसीत्?"इति।

"श्रीमन्! ऋणं तु मार्गे दत्तम्। तदा समीपे कोऽपि न आसीत्। वटवृक्षस्य अधः उपविश्य धनं गणयित्वा एतस्मै दत्तवान् अहम्" इति उक्तवान् नारायणश्रेष्ठी।

"तर्हि अलम्। सः वटवृक्षः एव एतस्मिन्

व्यवहारे साक्षी। भवान् इदानीं गत्वा तं वटवृक्षं वदतु यत् ग्रामप्रमुखः अहं साक्ष्यनिमित्तम् आह्वयन् अस्मि इति'' इति नारायणश्रेष्ठिनम् उक्तवान् ग्रामप्रमुखः।

नारायणश्रेष्ठी सङ्कोचेन– ''वटवृक्षः एतावत्पर्यन्तम् आगत्य कथं वा....'' इति यावत् उक्तवान् तावता ग्रामप्रमुखः पुनः उक्तवान्– ''मया यथा उक्तं तथा करोतु। शीघ्रं गच्छतु। मम वचनम् उक्त्वा अधः पतितानि तदीयानि कानिचन पर्णानि स्वीकृत्य आगच्छतु। वयं भवन्तं प्रतीक्षमाणाः भविष्यामः'' इति।

तत्र सम्मिलिताः सर्वे ग्रामप्रमुखस्य वचनं श्रुत्वा मनसि एव हसितवन्तः। 'असम्बद्धं किमपि वदन् ग्रामप्रमुखः नारायणश्रेष्ठिनः उपहासं कुर्वन् अस्ति। वटवृक्षः कथं साक्ष्यं वदेत्? ग्रामप्रमुखस्य मतिः भ्रष्टा स्यात्' इति आलोचितवान् गुरुराजः।

नारायणश्रेष्ठी ततः निर्गतः। किञ्चित्कालानन्तरं ग्रामप्रमुखः अन्यत्रगमनत्वरां प्रदर्शयन्– ''किमथ विलम्बं करोति सः श्रेष्ठी? गुरुराज! सः कदा प्रत्यागच्छेत्? कियद्दूरे अस्ति सः वटवृक्षः?'' इति पृष्टवान्।

''भवता अन्यत्र गन्तव्यम् अस्ति इति भाति। भवान् गत्वा आगच्छतु नाम। यतः नारायणश्रेष्ठिनः प्रत्यागमने विलम्बः भवेत् एव। स च वटवृक्षः इतः द्वियोजनदूरे अस्ति। मार्गः अपि न समीचीनः। अतः विलम्बः सहजः'' इति उक्तवान् गुरुराजः।

तदा ग्रामप्रमुखः झटिति उत्थाय– ''अये वञ्चक! यस्य वृक्षस्य अधः नारायणश्रेष्ठिना ऋणं दत्तं तं वटवृक्षं सम्यक् स्मरति एव भवान्'' इति क्रोधेन वदन् गुरुराजं वेत्रदण्डेन सम्यक् ताडितवान्।

गुरुराजमुखात् उपायेन सत्यं वाचितम् आसीत् ग्रामप्रमुखेण। गुरुराजः अनिवार्यतया ऋणं वृद्धिसहितं प्रत्यर्पितवान्।

सर्वे ग्रामीणाः ग्रामप्रमुखस्य बुद्धिमत्तां बहुधा प्रशंसितवन्तः।



# वाक्चातुर्यम्

राजपाल्यनामके ग्रामे दिनेशः नाम कश्चन वाक्चतुरः निवसति स्म। कदाचित् ग्रामीणाः सर्वे सम्भूय निश्चित्य दिनेशं सूचितवन्तः यत् देवालयस्य निर्माणार्थं भवता प्रतिगृहं गत्वा धनं सङ्गृह्य आगन्तव्यम् इति।

तस्मिन् ग्रामे रामभद्रः लक्ष्मणसूरिः इति द्वौ वणिजौ आस्तम्। तौ यमलौ इत्यतः तयोः आकारे भेदः स्फुटतया न भासते स्म। आत्मीयाः अपि कदाचित् तयोः भेदं ज्ञातुं क्लेशम् अनुभवन्ति स्म।

दिनेशः प्रथमं लक्ष्मणसूरेः गृहं गतवान्। आगमनकारणं ज्ञात्वा लक्ष्मणसूरिः उक्तवान्– "भवता प्रथमं मम अग्रजस्य रामभद्रस्य गृहं गन्तव्यम् आसीत्" इति।

तदा दिनेशः उक्तवान्– "दानगुणे भवत्समानः एतस्मिन् ग्रामे अन्यः नास्ति। दातॄणाम् आवल्यां प्रथमं भवतः नाम भवति चेदेव शोभा। अतः अत्र आगतवान् अस्मि" इति।

लक्ष्मणसूरिः अष्टोत्तरशतं रूप्यकाणि दत्त्वा तं प्रेषितवान्। अनन्तरदिने दिनेशः रामभद्रस्य गृहं गतवान्। आगमनकारणं निवेद्य उक्तवान् च– "ज्येष्ठस्य भवतः गृहं प्रथमम् आगन्तव्यम् आसीत्। प्रमादवशात् भवतः अनुजस्य गृहं गतवान्। सः अष्टोत्तरं शतं रूप्यकाणि दत्त्वा "अलं खलु?" इति पृष्टवान्। भवान् दानगुणेन अपि ज्येष्ठः एव। एतदनुगुणं धनं दातव्यं भवता" इति।

तदा तेन उक्तः पुरुषः उक्तवान्– "दिनेशवर्य! भवान् वाक्चतुरः इति तु सत्यम् एव। किन्तु भवता यथा चिन्तितं तथा अहं न रामभद्रः, अपि तु ह्यः भवता दृष्टः लक्ष्मणसूरिः एव। अग्रजः स्नानं कुर्वन् अस्ति। इदानीम् आगच्छेत्। तस्य आगमनस्य अनन्तरं तं कामं प्रशंसतु नाम" इति।

अग्रजस्य गृहम् आगतं लक्ष्मणसूरिम् अभिज्ञातुम् अशक्तः दिनेशः 'मम वाक्चातुर्यम् अत्र फलप्रदं न जातम्' इति आलोच्य लज्जया शिरः अवनमय्य स्थितवान्।





# सुवर्णकृषिः

बहुभ्यः वर्षेभ्यः पूर्वं जावाद्वीपे डोङ्गो नाम कश्चन बालकः आसीत्। अनाथः सः कस्याश्चित् विधवायाः क्षेत्रे कृषिकार्यं करोति। तच्च क्षेत्रं सारयुक्तम्। किन्तु दौर्भाग्यं नाम यस्मिन् वर्षे डोङ्गः तत्र कृषिं कृतवान् तस्मिन् वर्षे सर्वाणि धान्यानि निस्साराणि आसन्। सस्यानि सम्यक् एव प्रवृद्धानि। सस्यमञ्जर्यः अपि सम्यक् एव आगतानि। किन्तु अन्ते एकम् अपि धान्यं सारयुतं न आसीत्।

'मम दौर्भाग्यकारणतः एवं जातम्' इति भावयन्ती सा विधवा अनन्तरवर्षे अपि डोङ्गद्वारा एव कृषिं कारितवती। एतस्मिन् वर्षे अपि धान्यानि निस्साराणि एव।

एतत्सर्वं दृष्ट्वा ग्रामीणाः परस्परं वार्तालापं कृतवन्तः यत् एषा विधवा कृपणा, ग्रामदेवतायाः पूजां यथाविधि न करोति, अतः एव तस्याः क्षेत्रे धान्यानि निस्साराणि भवन्ति इति। एतानि वचनानि तया विधवया अपि श्रुतानि। एतेन कुपिता सा डोङ्गं गृहात् निष्कासितवती। प्रेषणसमये डोङ्गाय एकं नाणकम् अपि न दत्तवती सा।

डोङ्गः तस्मात् ग्रामात् प्रस्थितः। महती बुभुक्षा तं बाधते। तथापि सः अग्रे गच्छन् अन्यं कञ्चन ग्रामं प्राप्य ग्रामसीमायां स्थितस्य गृहस्य द्वारम् अङ्गुल्या ताडितवान्। तस्य गृहस्य स्वामिनी विधवा द्वारम् उद्घाटितवती। तावता स्थातुम् अपि अशक्तः डोङ्गः तत्रैव पतितः सन्– "अम्ब! बुभुक्षया म्रियमाणः अस्मि। कृपया खादनार्थं किञ्चित् ददातु" इति दैन्येन प्रार्थितवान्।

सा विधवा हस्तसाहाय्येन तम् अन्तः नीत्वा भोजनं परिवेषितवती। भोजनानन्तरं पृष्टवती सा– "भोः, भवान् तु दृढकायः।

"जावाप्रदेशीया जानपदकथा"

विकलाङ्गः अपि न। तथापि किमर्थं भिक्षायाचनम्? किं भवान् कार्यं कर्तुं न शक्नोति?" इति।

तदा डोङ्गः प्रवृत्तं सर्वं निवेद्य– "तत्र मया परिश्रमेण कार्यं तु कृतम्। मया यावत् कृतं तावत् अन्यः कोऽपि कर्तुं न शक्नुयात्। तथापि धान्यानि निस्साराणि चेत तत्र मम को दोषः? परिश्रमः मदधीनः। धान्ये सत्त्वस्य पूरणं भगवदधीनम्" इति उक्तवान्।

"सत्यम्। अत्र भवतः दोषः कोऽपि नास्ति। तत् आस्तां तावत्। भवान् कृषिं कर्तुम् इच्छति चेत् मम क्षेत्रे करोतु। प्राप्ते फले पञ्चमः अंशः भवते। एतत् किम् अनुमतम्? किन्तु मम क्षेत्रं न विशालम्" इति उक्तवती सा विधवा।

"चिन्ता नास्ति। अहं निर्वञ्चनं कार्यं करिष्यामि" इति उक्तवान् डोङ्गः।

अनन्तरदिने कुद्दालं स्वीकृत्य क्षेत्रं गतवान् डोङ्गः। कुद्दालेन खनन् सः हलेन यथा तथा भूमिं सम्यक् सज्जीकृतवान्। जलव्यवस्थां कृत्वा सस्यानि आरोपितवान्। सस्यानि प्रवृद्धानि। सस्यमञ्जर्यः अपि निर्गताः। ताः सुवर्णकान्तिं प्राप्तवत्यः।

सस्यलवनकालः आगतः। डोङ्गः कदाचित् मञ्जरीस्थानि धान्यानि परीक्षितवान्। धान्यानाम् अन्तः सत्त्वांशः न दृश्यते! एतत् दृष्ट्वा डोङ्गः दिग्भ्रान्तः।

"मम दौर्भाग्यकारणतः एवं भवति इति भाति। मत्कारणतः मम स्वामिनी इदानीं हानिम् अनुभवति' इति डोङ्गः नितरां



खिन्नः। एतं विषयं सः स्वामिनीं वक्तुं न शक्नोति। यतः तावत् धैर्यं नास्ति तस्य।

इतः पलायनं करणीयम् इति निश्चितवान् डोङ्गः। अनन्तरदिने प्रातः एव निश्शब्दम् उत्थाय सः प्रस्थितवान्। गमनात् पूर्वम् अन्तिमवारं क्षेत्रं द्रष्टव्यम् इति प्रबला इच्छा तस्मिन् उत्पन्ना। सः क्षेत्रं गत्वा मञ्जरीस्थं धान्यं पुनः परीक्षितवान्। अन्तः सुवर्णमयं बीजं तेन प्राप्तम्। पुनः पुनः परिशील्य सः निश्चितवान् यत् तत् बीजं सुवर्णमयम् एव इति। अपरं धान्यं परीक्षितवान् सः। तत्रापि सुवर्णबीजम् अस्ति। अन्याः मञ्जर्यः तेन परीक्षिताः। सर्वासु मञ्जरीषु सुवर्णबीजानि दृष्टानि तेन।

स्वनेत्रयोः एव अविश्वासः तस्य। सः पुनः पुनः धान्यानां परीक्षणं कृतवान्। समग्रे क्षेत्रे यत्र कुत्रापि दृष्टं चेत् अपि सुवर्णबीजम् एव प्राप्यते!

एतानि सुर्णबीजानि स्वामिन्यै प्रदर्शयितुं सः धावन् गृहं गतवान्। तं दृष्ट्वा पृष्टवती स्वाीमिनी– "किं भोः? किमर्थम् एवं वेगेन धावन् आगतवान् भवान्?" इति।

"अस्माकं क्षेत्रे सुर्णबीजानि फलितानि सन्ति। पश्यतु तावत्" इति वदन् सः अपरिमितेन सन्तोषेण सुवर्णधान्यं प्रदर्शितवान्।

सस्यलवनं समाप्तम्। सुवर्णबीजानि खले राशीकृतानि। पूर्वं यथा उक्तं, तदनुगुणं सा स्वामिनी विधवा डोङ्गाय प्राप्ते धान्ये पञ्चमांशं दत्तवती। ग्रामस्थान् सर्वान् मेलयित्वा डोङ्गस्य हस्तगुणस्य प्रशंसां कुर्वती सा विशेषभोजनकूटं व्यवस्थापितवती।

एवं प्राप्तेन धनेन डोङ्गः कृषिक्षेत्रं क्रीतवान्। अनन्तरवर्षे स्वक्षेत्रे स्वामिन्याः क्षेत्रे च स्वयम् एव कृषिं कृतवान् सः। क्रमशः तेन कर्मकराः नियोजिताः। तेभ्यः सः वेतनरूपेण पञ्चमांशं यच्छति स्म। इदानीम् अपि जावाद्वीपे कृषिकर्मकरेभ्यः पञ्चमांशः वेतनरूपेण दीयते इति श्रूयते।





फेसिफिक्महासागरे, अट्लाण्टिक्महासागरे च निवसन्तः साल्मन्मीनाः मधुरजलप्रवाहे अण्डानि स्थापयन्तः सन्तानं वर्धयन्ति। किन्तु एतेषां वासः तु सदा समुद्रजले एव। अण्डप्रसूत्यर्थम् एव एते अनेकान् अवरोधान् विघ्नान् च तृणीकृत्य शताधिकमैल् यावत् प्रयाणं कृत्वा मधुरजलप्रवाहस्थलं प्राप्नुवन्ति।

## साल्मन् मीनाः

## वर्णगोधिका



'वर्णगोधिका परिसरस्य अनुगुणं वर्णपरिवर्तनं कर्तुं शक्नोति' इति बहवः भावयन्ति। किन्तु एतत् मिथ्या। यतः एताः परिसरानुगुण्येन धूसरवर्णं, हरिद्वर्णं वा केवलं प्राप्तम् अर्हन्ति। तासां चर्मपटलस्य अन्तः स्थितानां कणानां वर्णपरिवर्तनात् एतत् शक्यते।

## अतिप्राचीनः सजीववृक्षः

अतिप्राचीनः सजीवः वृक्षः क्यालिफोर्नियास्थे श्वेतपर्वते अस्ति। ब्रिसिल्कोन्पैन् इति नाम्ना ख्यातस्य देवदारुविशेषस्य एतस्य वयः ४,६०० वर्षात्मकं स्यात् इति भाव्यते।



# किमर्थं वृथा आतङ्कः?

| | | |
|---|---|---|
| बन्धुः - | किमिदम्? सर्वे एकत्र सम्मिलिताः चेदपि सम्भाषणं नास्ति। सर्वेषां मुखे गाम्भीर्यम्! | How is it, there is such silance. All are together, but no one speaks. There is seriousness on everybody's face! |
| पिता - | सुरेशस्य उद्योगस्य विषये चर्चा प्रचलति। | Some discussion is going on about the job opportunity for Suresh. |
| बन्धुः - | सुरेशस्य उद्योगः प्राप्तः वा? कदा? कुत्र? | Has Suresh got a job? When? Where? |
| पिता - | उद्योगस्य नियुक्तिपत्रं तु आगतम्। किन्तु उद्योगः सुदूरे बिहारराज्ये। | The Letter of appointment has been received. But the place of posting is in far away Bihar. |
| माता - | तावद्दूरम् एकमात्रं पुत्रम् एतं प्रेषयितुं मम तु इच्छा नास्ति। | I don't wish to send my only son to a far off place. |
| पिता - | मम अपि स एव आशयः। किन्तु सुरेशः वदति— गच्छामि एव इति। | I also do not but Suresh says, he will go. |
| बन्धुः - | किं दूरं व्यवसायिनाम्? सुरेश! गच्छतु भवान्। प्राप्तः अवकाशः न त्यक्तव्यः। | Is distance a problem for a professional? Suresh, you go. Don't lose the opportunity. |
| सुरेशः - | अहम् अपि तदेव वदामि। | That's what I also say. |
| पिता - | तथापि तावद्दूरं ....। | But to such a far away place...... ? |
| बन्धुः - | इदानीं दूरं सर्वथा न गण्यते। तत्र गतः सः विरामे तदा तदा आगमिष्यति एव। द्वित्रेषु वर्षेषु स्थानान्तरणम् अपि प्राप्तुं शक्यते। किमर्थं वृथा आतङ्कः? सुरेशः गच्छतु नाम। | Distance is not a problem these days. He will be coming home during the holidays. And he can try for a transfar after two or three years. Why do you worry unnecessarily? Let him go. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अर्गलम् - | Wooden bolt |
| आरात्रि - | The whole night |
| उन्मत्तः - | Lunatic |
| कण्डोलकारः - | Basket maker |
| कुद्दालः - | Spade |
| क्रकचः - | Saw(N) |
| खलम् - | Thrashingfloor |
| घूर्णयन् - | Rolling |
| चरमम् - | Last |
| जम्बीरम् - | Lime |
| धूमपानम् - | Smoking |
| धूसरः - | Grey |
| निम्बपत्रम् - | Neem leaf |
| निस्सारम् - | Refuse grain |
| पञ्चमांशः - | One fifth part |
| पर्णम् - | Leaf |
| मत्तः - | From me |
| मर्मस्थलम् - | Sensitive part of the body |
| महानौका - | Ship |
| मिष्टखाद्यम् - | Sweetmeat |
| यमलौ - | Twins |
| युतकम् - | Shirt |
| लवनकालः - | Harvest time |
| लक्ष्यीकृत्य - | Having taken aim |
| वलन्ती - | Slanting |
| वलयः - | Bangle |
| वाममार्गः - | Dubious way |
| विधवा - | Widow |
| विधूननम् - | Shaking |
| वेत्रदण्डः - | Cane |
| शलभः - | Grasshopper |
| शवस्तूपः - | Tomb |
| शाद्वलः - | Grassland |
| शैत्यम् - | Chillness |
| समीकरणम् - | Repair |
| सम्माननम् - | Honour |
| सस्यमञ्जरी - | An ear of corn |
| साधु - | Very good |
| साक्ष्यम् - | Witness |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां फेब्रवरी-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **दूरस्थायाः अपि तस्याः वाणीं स्फुटम् आकर्णयामि।**

द्वितीयचित्रम् - **अन्तस्थायाः अपि नाड्याः गतिं सम्यक् उपवर्णयामि।**

प्रेषकः - श्रीधर इनामदार, शास्त्रीवाडा, हळे तालूककछेरी गल्लि, धारवाड-५८०००१.


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्,** चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्,** चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# What makes Junior Quest every child's best friend?



It's crammed with answers.
't's a challenge to do-it-yourself.
's an invitation to contests.
It's an exciting pull-out in each issue.

JUNIOR QUEST
*Where finding out is fun*

PRICE Rs.5/-




To subscribe write to,
JUNIOR QUEST,
Dolton Agencies, Chandamama Buildings,
N.S.K. Salai, Vadapalani,
Madras: 600 026.

***A new monthly English children's magazine***

